# ग्रन्थरत्नमाला

## सोमदेवसूरिविरचितम् ।

# नीतिवाक्यामृतम् ।

॥ ओं नमः श्रीगणेशाय ॥

अथ धर्मार्थफलाय राज्याय नमः ।

यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः । अधर्मः पुनरेतद्विपरीतफलः । आत्मवत्परत्र कुशलवृत्तिचिन्तनं शक्तितस्त्या-

---

ओं नमः श्रीगणेशाय ।

१ वक्ष्यमाणलक्षणाय राजकर्मणे । २ 'अभ्युदय': सुख 'नि·श्रेयस' कल्याण एतद्द्वय यस्मात् सिद्ध्यति स धर्मः । इदमेव मुख्य लक्षणम् । काणादास्तु—'अभ्युदय': तत्वज्ञानम् 'नि. श्रेयसम्' आत्यन्तिकी दु.खनिवृत्ति. तदुभयम् यत· प्राप्यते स. धर्म.—इति । अभ्युदयद्वारक नि श्रेयसम्—इति मध्यमपदलोपी समास· पञ्चमी तत्पुरुषोऽपि वेत्याहु· । गौतमीयानुसारिण. केचन—'अभ्युदय'· स्वर्गः निः श्रेयसम्' मोक्ष तयोः सिद्धिः उत्पत्तिः यतः कारणात् भवति स धर्म—इति मन्यन्ते । मीमांसकास्तु—"चोदनालक्षणोऽर्थो धर्मः" इति धर्मस्य स्वरूप प्रमाण च आहु । क्रियायाः प्रवर्तक वचन चोदना । तया योऽर्थः लक्ष्यते स पुरुष नि.श्रेयसेन सयुनक्ति । चोदना हि भूत, भवन्तं, भविष्यन्त, सूक्ष्म, व्यवहित विप्रकृष्टमित्येवजातीयकमर्थं अवगमयितु शक्नोति तस्मात्—यो वेदप्रमाणक. स धर्म·—इति स्वरूप—यो धर्म. स वेदप्रमाणक.—इति लक्षण च उक्त भवति । यथाहुर्भट्टा —

द्वयमेकेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यते ।

इति । 'द्वय' लक्षण प्रमाण चेत्यर्थ. । लक्षणप्रमाणाभ्यां हि वस्तुसिद्धि. । स्मृतिरपि—

वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ।

इति । इदमप्यविरुद्धम् । वेदे हि अभ्युदयनिः श्रेयससाधनानामेव कर्तव्य-

गतपसी च धर्माधिगमोपायाः । सर्वसत्वेषु हि समता सर्वाचरणानां परमं चरणम् । न खलु भूतद्रुहां कापि क्रिया प्रसूते श्रेयांसि परत्रेह च । अजिघांसुमनसां व्रतरिक्तमपि चरितं स्वर्गाय जायते । स खलु त्यागो देशत्यागः, यस्मिन्कृते भवत्यात्मनो दौःस्थित्यम् । स खलु अर्थी परिपन्थी यः, परस्य दौःस्थित्यं जानन्नप्यभिलषत्यर्थम् । तद्व्रतमाचरितव्यं, यत्र न संशयतुलामारोहतः शरीरमनसी । ऐहिकामुत्रिकफलार्थमर्थव्ययस्त्यागः । भस्मनि हुतमिवापात्रेष्वर्थव्ययः । पात्रं हि त्रिविधम् । धर्मपात्रं कार्यपात्रं कामपात्रं चेति । इदं [illegible] केचित् । किं तया कीर्त्या? या आश्रितान्न बिभर्ति प्रतिरुणद्धि वा धर्मम् । भागीरथी—श्री—पार्वतीवत् भावानामन्यदेव प्रसिद्धेः कारणं, न पुनस्त्यागः । यतो न खलु गृहीतारो व्यापिनः सनातनाश्च । स खलु कस्यापि माभूदर्थो यत्राशाभङ्गः शरणागतानाम् । अर्थिषु संविभागः स्वयमुपभोगश्चार्थस्य सिद्धे फले । नास्त्यौचित्यमेकान्तलुब्धस्य । दानप्रियवचनाभ्यामन्यस्य हि सन्तोषोत्पादनमौचित्यम् । स खलु लुब्धो यःसत्सु विनियोगादात्मना सह जन्मान्तरेषु नयत्यर्थम् । अदातुः प्रियालापो ऽन्यत्र लाभस्यान्तरायः । सदैव दुःखस्थितानां को नाम बन्धुः । नित्यमर्थयमानात्को नाम नो

---

त्वेनोपदिश्यमानत्वात् । अन्ये पुनरेतन्नाद्रियन्ते । तेषां मते—यो वेदप्रमाणक. स धर्म—इति लक्षणमेव अयुक्तम् । तत्र अनर्थावहानां श्येनादीनामपि उपदिश्यमानत्वात् वेदेन यद्यदुपदिष्टं तत्सर्वमपि अभ्युदयनिःश्रेयससाधन नमवति । अतः—वेदे उक्तमनुक्त वा यत् अभ्युदयनि.श्रेयससाधन भवति स एव धर्म—इत्यास्तां अप्रसक्तेन ।

१ 'संविभागः' विभजनम् । केचन अर्थस्य—दानं भोगो नाश—इति तिस्रो गतय इत्याहु । २ केवलस्य लोभिनः । ३ यदस्मिन् जन्मनि दीयते तदेव जन्मान्तरेऽपि प्राप्नोति अतो वचोभङ्ग्या दातैव लुब्ध इत्युक्तम् । ४ तस्य प्रियालापेन लोभितोऽर्थी अन्य याचितु न त्वरयति एतदेव विघ्नम् ।

द्विजते। इन्द्रियमनसोर्नियमानुष्ठानं तपः। विहिताचरणं निषिद्धपरिवर्जनं च नियमः। विधिनिषेधावैतिह्यायत्तौ। तत्र खलु सद्भिः श्रद्धेयमैतिह्यं, यत्र न स्वप्रमाणबाधा पूर्वापरविरोधो वा। हस्तिस्नानमिव विफलं सर्वमनुष्ठानमनियमितेन्द्रियमनोवृत्तीनाम्। दुर्भगाभरणमिव केवलं देहखेदावहमेव ज्ञानं स्वयमनाचरतः। सुलभः खलु कथक इव परस्य धर्मोपदेशे लोकः। प्रत्यहं किमपि नियमेन प्रयच्छतस्तपस्यतो वा भवन्त्यवश्यं महीयांसः परे लोकाः। कालेन संचीयमानः परमाणुरपि जायते

---

१ अज्ञातार्थज्ञापक वाक्यं विधिः—इति वद्रव'। अप्राप्तप्रापक वाक्य विधिरिति वैय्याकरणाः। अज्ञातार्थज्ञापको वेदभागो विधिः—इति मीमांसकाः स च तादृशप्रयोजनवदर्थविधानेन अर्थवान् भवति। तादृशमर्थं च प्रमाणान्तरेण प्राप्त विधत्ते। यथा"ज्योतिष्टोमेन यजेत"—"अग्निहोत्र जुहुयात्" इत्यादि विधिः प्रमाणान्तरेण अप्राप्तं स्वर्गप्रयोजनवन्तं होमं विधत्ते। स हि अपूर्वत्वादिभेदभिन्नो भवति। प्रवर्तक वचन विधिरिति तात्पर्यम्।

निषिद्ध्यते अनेन इति 'निषेधः'। अनिष्टसाधनताबोधकं वेदादिवाक्य निषेधः— इति मीमांसकाः। यथा—विधिः प्रवर्तनां प्रतिपादयन् स्वप्रवर्तकत्वनिर्वाहार्थं विधेयस्य यागादेः इष्टसाधनत्वं आक्षिपन् पुरुष तत्र प्रवर्तयाति। तथैव "न कलञ्ज भक्षयेत्" इत्यादिनिषेधोऽपि निवर्तयन् स्व निवर्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणस्य अनिष्टसाधनत्वमाक्षिपन् पुरुष तस्मान्निवर्तयाति। निवर्तक वचन निषेध—इति फलितोऽर्थः।

पारम्पर्योपदेशः। इति ह ऊचुर्वृद्धाः इति 'ऐतिह्य' अनिर्दिष्टप्रवक्तृकः उपदेशः। लोकप्रवाद इति यावत्। यथा—अत्र वृक्षे यक्षो वर्तते—अस्मिन्देवालये देवताः नृत्यन्ति—इत्यादि प्रवादः श्रूयते। परमेतत् केन कदा कस्मिन् समये दृष्टमिति न ज्ञायते। पौराणिकास्त्विद प्रमाणत्वेन स्वीकुर्वन्ति।

ग्रन्थकृदयं जैनः। तन्मते वेदोऽपि ऐतिह्यमेव। अत एव विधिनिषेधौ ऐतिह्यायत्तौ इति तेनोक्तम्। वेदप्रामाण्यवादिनां मते तु—विधिनिषेधौ वेदापौरुषेयवाक्यायत्तौ इति सिद्धान्तः।

२ यस्य ऐतिह्यस्य प्रामाण्ये बाधा नस्यात् पूर्वापरविरोधो वा न वर्तते तदेव श्रद्धया ग्राह्यम्। ३ कथोपजीवी।

मेरुः । धर्म–श्रुत–धनानां लवो ऽपि प्रतिदिनं सङ्गृह्यमाणो[1] भवति समुद्रादप्यधिकः । धर्माय नित्यमजाग्रतामात्मवञ्चनम् । कस्य नाम एकदैव सम्पद्यते पुण्यराशिः । स्वयमनाचरतां मनोरथाः स्वप्नराज्यसमाः । धर्मफलमनुभवतो ह्यधर्मानुष्ठानमनात्मज्ञस्य । कः सुधीर्भैषजमिवात्महितं धर्मं परोपरोधान्नानुतिष्ठति । धर्मानुष्ठाने भवत्यप्रार्थितमपि प्रातिलोम्यं लोकस्य । अधर्मकर्मणि को नाम नोपाध्यायः पुरश्चारी वा? । कण्ठ गतैरपि प्राणैर्नाशुभं कर्म समाचरन्ति कुशलबुद्धयः । स्वव्यसनतर्पणाय[2] धूर्तैर्दुरीहितवृत्तयः क्रियन्ते श्रीमन्तः । खलसंसर्गः किं नाम न करोति? । अग्निवत्स्वाश्रयमेव दहन्ति दुर्जनाः । वनगज इव तदात्वसुखलुब्धः[3] को न भवत्यास्पदमापदाम्? । धर्मातिक्रमाद्धनं परे नयन्ति । स्वयन्तु पापस्य भाजनं, सिंह इव सिन्धुरवधात्[4] । बीजभोजिनः[5] कुटुम्बिन इव नास्त्यधार्मिकस्यायत्यां किमपि शुभम् । यः कामार्थावुपहत्य धर्ममेवोपास्ते स पक्वं क्षेत्रं परित्यज्योषरं[6] कृषति । स खलु सुखी[7] योऽमुत्र सुखाविरोधेन सुखमनुभवति । इदमिह परमाश्चर्यं यदन्यायसुखलवादिहामुत्र चानवधिर्दुःखानुबन्धः । सुखादिभिः प्राणिनामुत्कर्षापकर्षौ धर्माधर्मयोर्लिङ्गम्[8] ।

---

१ अपितु सर्वोऽपीति शेषः । २ स्वस्य व्यसनपूरणाय । ३ तात्कालिकसुखलुब्धः । ४ यथा सिंह' गज व्यापादयति । पर तद्गण्डस्थलगतं मौक्तिकमन्य एव गृण्हाति । एव धन ग्राहिणोऽन्ये । स्वयन्तु पापभागेव । ५ बीजार्थे रक्षितमेव धान्य भुञ्जतः कुटुम्बिनः आयत्यां उत्तरस्मिन् काले फलप्राप्तिसमये वा यथा शुभं न भवति तथा अधार्मिकस्यापि इति भावः । ६ ऊषर क्षारमृत्तिकायुक्तो भूमिभाग' । ७ पारलौकिकसुखसाधनभूतस्य धर्मस्य विरोधमन्तरा सुख अनुभवति स सुखी । ८ इहजन्मनि सुखादिभिः उत्कर्ष. दु.खादिभिरपकर्षश्च धर्माधर्मयोः 'लिङ्गम्' अनुमानसाधनम् ।

किमपि हि नास्ति तद्वस्तु यत्रानैश्वर्यमदृष्टाधिष्ठात्र्याः।

## इति धर्मसमुद्देशः । १ ।

यतः सर्वप्रयोजनसिद्धिः सो[2]ऽर्थः। सोऽर्थस्य भाजनं योऽर्थानुबन्धेनार्थमनुभवति । अलब्धलाभो लब्धपरिरक्षणं रक्षितविवर्धनं चेत्यर्थानुबन्धः । तीर्थमर्थेनासम्भावयन्मधुछत्रमिव सर्वात्मना विनश्यति । धर्मसमवायिनः कार्यसमवायिनश्च पुरुषाः तीर्थम् । तादात्विक—मूलहर—कदर्येषु नासुलभः प्रत्यवायः । यः किमप्यसञ्चित्योत्पन्नमर्थमपव्ययति स तादात्विकः । यः पितृपैतामहमर्थमन्यायेनानुभवति स मूलहरः । यो भृत्यात्मपीडाभ्यामर्थं सञ्चिनोति स कदर्यः । तादात्विकमूलहरयोरायत्यां नास्ति कल्याणम् । कदर्यस्यार्थसङ्ग्रहो राजदायादतस्कराणामन्यतमस्य निधिः ।

## इति अर्थसमुद्देशः । २ ।

अभिमानिकरसानुविद्धा सर्वेन्द्रियप्रीतिर्यतः स कामः । धर्मार्थाविरोधेन कामं सेवेत । न निःसुखः स्यात् । समं वा त्रिवर्गं सेवेत । एको ह्यत्यासक्त्या सेवितो धर्मार्थकामानां आत्मानमितरौ च पीडयति । परार्थं भारवाहिन इवात्मसुखं निरुन्धानस्य धनोपार्जनम् । इन्द्रियमनःप्रसादनफला हि विभूतयः । नाजितेन्द्रियस्य कापि कार्यसिद्धिरिति । इष्टेऽर्थेऽनासक्तिर्विरुद्धे चा-

---

१ अदृष्ट दैव तस्य अधिष्ठात्र्याः 'देवताया' इति शेषः । प्रभुत्व यत्र न वर्तते नास्ति एतादृश किमपि वस्तु नास्ति ।

२ सर्वकार्यसिद्धिः यतो भवेत् स अर्थः । धनमिति यावत् । ३ यः अर्थस्य अनुबन्धेन पश्चात् भाव्यशुभपरिणामेन अर्थस्य उपभोग करोति सोऽर्थ भाग् भवति । ४ अर्थानुबन्धः फलसाधनम् । ५ धर्मसम्बधिनः लौकिककार्यकर्तारश्च । ६ त्रिवर्गो धर्मकामार्थाः । ७ सम्पत्तयः ।

प्रवृत्तिरिन्द्रियजयः । अर्थ शास्त्राध्ययनं वा । कारणे कार्योपचारात् । योऽनङ्गे नैापि जीयते स पुष्टान्नैरादीन्कथं जयेत्? । न कामासक्तस्यास्ति चिकित्सितम् । न तस्य धनं धर्मः शरीरं वा यस्य स्त्रीष्वत्यासक्तिः । विरुद्धकामप्रवृत्तिः समृद्धोऽपि न चिरं नन्दति । धर्मार्थकामानां युगपत्समवाये पूर्वः पूर्वो गरीयान् । कालसहत्वे पुनरर्थ एव । धर्मकामयोरर्थमूलत्वात् ।

## इति कामसमुद्देशः । ३ ।

अयुक्तितः प्रणीताः काम–क्रोध–लोभ–मद–मान–हर्षाः क्षितीशानामन्तरङ्गः षड्वर्गः । परपरिगृहीतास्वनूढासु वा स्त्रीषु दुरभिसन्धिः कामः । अविचार्य परस्यात्मनो वा पापहेतुरतिक्रोधः । दानार्थेषु स्वधनाप्रदानमकारणं परवित्तग्रहणं वा लोभः । कुल–बलैश्वर्य–रूप–विद्याभिरात्मनोऽहङ्कारकारणं परप्रधर्षनिबन्धनं वा मदः । दुरभिनिवेशो मोक्षोपयुक्तोक्तत्यग्रहणं वा मानः । निर्निमित्तमन्यस्य दुःखोत्पादनेन स्वस्यार्थसञ्चयेन वा मनःप्रतिरञ्जनो हर्षः ।

---

१ केचन—इष्टेऽर्थे अनासक्तिः अनिष्टे चानुद्वेगः इन्द्रियजयः–इत्याहुः । २ अर्थशास्त्राध्ययन कारण तेन च अर्थसम्बधिनियमज्ञाने इन्द्रियजयो भवदेव । ३ अनङ्गेन शरीररहितेन कामेन । ४ औषधम् उपाय इत्यर्थः । ५ शास्त्रविरुद्धे कामोपभोगे प्रवृत्तिर्यस्य । ६ धनादिक्षयेन दुःखभाक् भवति । ७ एकसमयप्राप्तौ । ८ कालान्तरेऽपि तत्करणसम्भवे अर्थ एव बलीयान् भवति । तमेव प्रथमं साधयेदनन्तरं धर्मकामौ । अपरे तु धर्मपरायणा धर्म एव प्रथममनुष्ठातव्य इति वदन्ति ।

न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः ।
इति तेषां मतम् ।

९ अन्यत्र कामक्रोध–लोभ–मोह–मद–मात्सर्याख्याः षड्वर्गत्वेन परिगणिताः । षड्वर्गः षण्णां शत्रूणां समूह इति यावत् । १० दुरभिसंन्धिः दुष्टोद्देशः । एतेन स्वस्त्रियां आसक्तिः न कामः–इति ध्वन्यते ।

## इति अरिषड्वर्गसमुद्देशः । ४ ।

योऽनुकुलप्रतिकूलयोरिन्द्र–यमस्थानं स राजा । राज्ञो हि दुःष्टनिग्रहः शिष्टपरिपालनं च धर्मो, न पुनः शिरोमुण्डनं जटाधारणं वा । राज्ञः पृथिवीपरिपालनोचितं कर्म राज्यम् । वर्णाश्रमवती धान्य–हिरण्य–पशु–कुप्य–विशिष्टफलदा च पृथ्वी । ब्राह्मणाः क्षत्रिया विशः शूद्राश्च वर्णाः । ब्रह्मचारी गृहस्थो वानप्रस्थो यतिरित्याश्रमाः । स उपकुर्वाणको ब्रह्मचारी, यो वेदमधीत्य स्नायात् । स्नानं विवाहदीक्षाविशेषः । स नैष्ठिको ब्रह्मचारी, यस्य प्राणान्तिकमदारकर्म । उत्पन्नः पुनीते वंशं स पुत्रः । अ पुत्रः पुमान्पितॄणामृणभाजनम् । अनध्ययनो ब्रह्मर्षीणाम् । अयजमानो देवानाम् । अहन्त(?)करो मनुष्याणाम् । आत्मा वै पुत्रः । नैष्ठिकस्यायमा-

---

१ इन्द्रवत् अनुकूलानां पोषणकर्ता यमवत् प्रतिकूलानां अपराधिनां वा शासन कर्ता स राजा । २ प्रजापालनेनैव पुरुषार्थसिद्धेः शिरोमुण्डन सन्यासादिक तेन न कर्तव्यमित्यर्थः । ३ 'कुप्य' विशिष्टवस्तुजातम् । ४ उपकुर्वाणक' अध्ययनसमाप्त्यनन्तरं दक्षिणादिना गुरु उपकरोति स उपकुर्वाण' । द्विविधो हि ब्रह्मचारी । नैष्ठिक. उपकुर्वाणश्च । यस्तु आमरण गुरुसमीपे वसति स नैष्ठिकः । स्वाध्यायग्रहणान्त गुरौ वसन् तदनुज्ञातः दक्षिणादिना उपकार कृत्वा समावृत्तः गार्हस्थ्यादि स्वीकरोति स उपकुर्वाणः । अध्यनात् पूर्वं गुरवे न किञ्चिदप्युपकुर्वीत ।

न पूर्वं गुरवे किञ्चिदुपकुर्वीत धर्मवित् ।

इति मनूक्तेः । ५ "जायमानो वै ब्राह्मणः त्रिभिर्ऋणैर्जायेत्" । इति श्रुते । ब्राह्मणग्रहणमुपलक्षणार्थम् । क्षत्रियादीनामपि ऋणत्रयं वर्तत्येव । तत्र पुत्रेण पितॄणां, अध्ययनेन ऋषीणां यज्ञैर्देवानां ऋणापाकरण भवति । "ऋणमस्मिन्सनयति अमृतत्वं च गच्छति" इत्याद्याः श्रुतयोऽत्रानुसन्धेयाः ।६ 'अहन्तकर.' हन्तीति खेदे । यः मृतोऽपि न अन्येषां खेदमावहति स अहन्तकरः मनुष्याणामृणी भवति । एतदपाकरण तु लोकोपकारककार्यकरणेनैव भवति । मनुष्य ऋण तु श्रुतौ कण्ठरवेण कुत्रापि नोक्तम् । तथापि "स शोच्यः स्थावरै-

त्मा ह्यात्मनात्मानमात्मनि सन्दधानः पूतता प्रतिपद्यते । नित्यनैमित्तिकानुष्ठानस्थो गृहस्थः । ब्रह्मामर–पित्रतिथि–भूतयज्ञा हि नित्यमनुष्ठानम् । दर्शपौर्णमासाद्याश्रयं नैमित्तिकम् । यः खलु यथाविधि जानपदमाहारं संसारव्यवहारं च परित्यज्य सकलत्रोऽकलत्रो वा वने प्रतितिष्ठते स वानप्रस्थः । यः सम्यग्विद्यानौलभेन तृष्णासरित्तरणप्रयोगाय यतते स यतिः । राज्यमूलं क्रमो विक्रमश्च । आचारसम्पत्तिः क्रमसम्पत्तिं करोति । अनुत्सेकः खलु विक्रमस्यालङ्कारः । क्रमविक्रमयोरन्यतमपरिग्रहेण राज्यस्य दुःकरः परिणामः । क्रमविक्रमयोरधिष्ठानं बुद्धिमान् अहार्यबुद्धिर्वा । यो विद्याविनीतमतिः स बुद्धिमान् । सिंहस्येव केवलं पौरुषावलम्बिनो न चिरं कुशलम् । अनस्त्रशूर इवाशास्त्रः प्रज्ञावानपि भवति सर्वे-

---

गपि" इत्यादिभि "सोऽनु कम्प्य." इत्यादिभिश्च अपुत्रस्येव तस्य निन्दा श्रूयते। अत. तदपि युक्तमिति प्रतीमः । ७ "आत्मा वैपुत्रनामासी" इत्यैतरेयश्रुतेः ।

१ यस्य अकरणे प्रत्यवायः तन्नित्यम् । यथा ब्राह्मणस्य सन्ध्यावन्दनादि । निमित्ता दागतं नैमित्तिकम् । यथा पुत्रजन्मादिनिमित्तमाश्रित्य विहित जातेष्ट्यादि । तयोरनुष्ठाने आचरणे स्थितःगृहस्थ इत्युच्यते । २ यत् अग्नौ जुहोति स देवयज्ञः । यद्बलिं करोति स भूतयज्ञः । यत् पितृभ्यो ददाति स पितृयज्ञः । यत् स्वाध्यायमधीते स ब्रह्मयज्ञः । यन्मनुष्येभ्यो ददाति स मनुष्ययज्ञः–इत्याह आश्वलायनः ।३ वनस्य समूहः वान तस्मिन्प्रातितिष्ठति स वानप्रस्थः । स च द्विविध. पचमानोऽपचमानश्च । यः पक्क अन्न फलादि भुङ्क्ते स पचमानः । सोऽपि । अश्मकुट्टाऽश्मनैव पेषणादिकर्ता भवेत् । य पुनरपक्काशी स अपचमानः । सोऽपि दन्तोलूखलः दन्तैरेव पेषणादिकर्ता भवति । ४ यतते मोक्षायेति यतिरिति वा ।

५ अनौद्धत्यम् । ६ न केवल सदाचारेण केवल पराक्रमेण वा राज्यपरिपालनं भवति । अपि तु उभाभ्यामपि । आचारैकपरायणं शान्तं चोरादयः पराभवन्ति । सदा विक्रान्त द्रुह्यन्ति उद्विजन्ते च जनाः ।

षां गोचरः । अलोचनगोचरे ह्यर्थे पुरुषाणां शास्त्रं तृतीयं लोचनम् । अनधीतशास्त्रः चक्षुष्मानपि पुमानन्ध एव । नह्यज्ञानादन्यः पशुरस्ति । वरमराजकं भुवनं न मूर्खो राजा । अकृतसंस्कारं रत्नमिव सुजातमपि राजपुत्रं न नायकपदायामनन्ति साधवः । न पुनर्दुर्विनीताद्राज्ञः प्रजाविनाशायापरोऽस्त्युत्पातः । युक्तायुक्तयोगवियोगयोरविवेकमतिर्वा स दुर्विनीतः । यत्र सद्भिराधीयमाना गुणाः सङ्क्रामन्ति तद्द्रव्यम् । द्रव्यं हि क्रियां विनयति, नाद्रव्यम् । यतो द्रव्याद्रव्यप्रकृतिरपि कश्चित्पुरुषः सङ्कीर्णगजवत् । शुश्रूषा–श्रवण–ग्रहण–धारण–विज्ञानोहापोह–तत्वाभिनिवेशविद्याः इति बुद्धिगुणाः । श्रोतुमिच्छा शुश्रूषा । श्रवणमाकर्णनम् । ग्रहणं शास्त्रार्थोपादानम् । धारणं कालान्तरादविस्मरणम् । मोह–सन्देह–विपर्यासव्युदासेन ज्ञानं विज्ञानम् । विज्ञातमर्थमवलम्ब्यान्येषु व्याप्त्या तथा विधिवितर्कणं ऊहः । उक्तियुक्तिभ्यां विरुद्धार्थात्प्रत्यवायसम्भावनया व्यावर्तनमपोहः । अथवा सामान्यज्ञानमूहो विशेषज्ञानमपोहः । विज्ञानोहापोहानुगमविशुद्धमिदमित्थमेवेति निश्चयस्तत्वाभिनिवेशः ।

यां सम्यगधिगम्यात्मनो हितमवैत्यहितं वापोहति सा

---

१ अलोचनगोचरस्यार्थस्य अज्ञानात् अशास्त्रविदन्ध एव । तदुक्तम्

अनेकसंशयोच्छेदी परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥

इति । २ "ज्ञानेन हीनाः पशवः प्रकीर्तिताः" इति उक्तत्वात् । ३ सुजातमपि अभिजनवन्तमपि शास्त्रादिभिरसंस्कृतं राजपुत्रं साधवो नीतिविशारदाः राजपदाय योग्यं न गणयन्ति । ४ शिक्ष्यमाणाः । द्रव्यं वस्तु ।

विद्या । आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चतस्रो राजविद्याः । अधीयानो ह्यान्वीक्षिकीं कार्याकार्याणां बलाबलं हेतुभिर्विचारयति । न विषीदति व्यसनेषु । नाभ्युदयेन विकार्यते । समाधिगच्छति च प्रज्ञावान् वैशारद्यम् । त्रयीं पठन्वर्णाश्रमाचारेष्वतीव प्रगल्भते । जानाति च समस्तामपि धर्माधर्मस्थितिम् । युक्तितः प्रवर्तयन्वार्तां सर्वमपि जीवलोकमभिनन्दयति । लभते च स्वयं सर्वानपि कामान् । यम इवापराधिषु दण्डप्रणयिनि

---

१ श्रवणा नन्तर ईक्षा पर्यालोचना सा प्रयोजनमस्याः सा आन्वीक्षिकी । तदुक्त कामन्दकेन ।

आन्वीक्षिक्यात्मविद्या स्यात् ईक्षणात् सुखदुःखयोः ।
ईक्षमाणः तया तत्व हर्षशोकौ व्युदस्यति ॥

सा च गौतमप्रणीता आत्मविद्या इति बहवः । वेदान्तिनस्तु गौतमप्रणीत प्रमाण विवेचनमेव स्वीकुर्वन्ति आत्मज्ञान तु उपनिषद्भ्य एव इति तेषां मतम्। २' त्रयीं' वेदत्रयी यथाह कामन्दक ।

ऋग्यजु सामनामानः त्रयो वेदास्त्रयी मता ।
उभौ लोकाववाप्नोति त्रय्यां तिष्ठन्यथाविधि ॥ १२ ॥
अङ्गानि वेदाश्चत्वारः मीमांसान्यायविस्तर ।
धर्मशास्त्रं पुराण च त्रयीदं सर्व मुच्यते ॥ [सर्ग २ श्लोक १३

इति । ३ वार्ता जीवन प्रजायावृत्तिरित्यर्थः ।सा च ।

वर्तनाद्धारणाद्वापि वार्ता सैव प्रगीयते ॥
पाशुपाल्य कृषिः पण्य वार्ता वार्तानुजीविनाम् ॥

इति देवीपुराणे । कामन्दकीये चोक्तलक्षणा । ४ नीयतेऽनयेति नीतिः दण्डस्यनीतिः दण्डनीतिरिति विग्रहः । यथाह कामन्दकः ।

दमो दण्ड इति ख्यात तात्स्थ्याद्दण्डो महीपतिः ।
तस्य नीतिर्दण्डनीतिर्नयनान्नीतिरुच्यते ॥

इति । अयमेव मुख्या विद्या । सर्वा विद्याः अस्मिन्नेव स्थिताः । यथोक्तम्

एकैव दण्डनीतिस्तु विद्येत्यौशनसी स्थितिः ।
तस्यां तु सर्वविद्यानामारम्भाः समुदाहृताः ॥

इति । ५ उन्मत्तो न भवति । ६ निपुणताम् । ७ प्रतिभान्वितो भवति ।

राज्ञि न प्रजाः स्वमर्यादामतिक्रामन्ति । प्रसीदत्त्रिवर्गफला हि विभूतयः । साङ्ख्यं योगो लोकायतं चान्वीक्षिकी । बौद्धो- हेतोः श्रुतेः प्रतिपक्षत्वात् । प्रकृति पुरुषज्ञो हि राजा सत्वमवलम्बते । रजःफलं चाफलं च परिहरति । तमोभिर्नाभिभूयते । उत्सहते च विद्यावृद्धसेवायाम् अजातविद्यावृद्धसंयोगो हि राजा निरङ्कुशो वनगज इव सद्यो विनश्यति । अनधीयानोऽप्यान्वीक्षिकीं विशिष्टसंसर्गात्परां व्युत्पत्तिमाप्नोति । अन्यैव खलु छायोपजलतरूणाम् । वंश—वृत्त—विद्याभिजनविशुद्धा हि राज्ञामुपाध्यायाः । शिष्टेषु नीचैराचरन्नरपतिरिह परत्र च महीयते । राजा हि परमं दैवतम् । नासौ कस्मैचित्प्रणमति । अन्यत्र गुरुजनेभ्यः । वरमज्ञानं नाशिष्टजनसेवया विद्या । अलं तेनामृतेन यत्रास्ति विषसंसर्गः । गुरुजनशीलमनुसरन्ति प्रायेण शिष्याः । नवेषु मृद्भाजनेषु लग्नः संस्कारो ब्रह्मणाप्यन्यथा कर्तुं न शक्यते । अन्ध इव वरं परमप्राज्ञो राजा, न तु ज्ञानलवदुर्विदग्धः । नीले रक्ते च वस्त्र इव दुर्विदग्धे

---

१ प्रसीदन्ति त्रिवर्गाणां धर्मार्थकामानां फलानि यासु ताः 'प्रसीदत्त्रिवर्गफला'। २ साङ्ख्यशास्त्र योगशास्त्र लोकायत चार्वाकमतसज्ञक च आन्वीक्षिकी । साङ्ख्य योगाभ्या आत्मप्रसादः लोकायतेन देहरक्षणादावभिनिवेश । ३ वेदविरुद्धत्वात् बौद्धजैनशास्त्रयोर्न आन्वीक्षिकीत्वम् । लोकायतमपि वेदविरुद्धम् । तथापि शरीरपोषणादौ तस्योपयुक्तत्वात् स्वीकारः । ४ जल समीपस्थ वृक्षाणां छाया यथा अधिक शीतला भवति जलाश्रयात् । एव आन्वीक्षिकीं अनधीयानोऽपि विद्वज्जनससर्गात् व्युत्पन्नो भवति इत्यभिप्राय । ५ गुरव । ६ 'नीचैराचरन्' नम्रतया वर्तमानः । ७ विषसंसृष्टममृतमिव अशिष्टजनसंसृष्टा विद्या न स्वीकार्येत्यर्थ । ८ प्रकर्षेण अज्ञः प्राज्ञ । ९ नीले रक्ते च वस्त्रे यथा पितादिः वर्णः न सङ्क्रामयितु शक्यते एवमेव दुर्विदग्धे राज्ञि गुणान्तरमाधातुमशक्यम् ।

राज्ञि को नाम रागान्तरमाधत्ते? । यथार्थवादो विदुषां श्रेयस्करो, यदि राजा तु न गुणप्रद्वेषी । वरमात्मनो मरणं नाहितोपदेशः स्वामिषु ।

## इति विद्यावृद्धसमुद्देशः ।

आत्ममनोमरुत्तत्वसमसमायोगलक्षण अध्यात्मयोगः । अध्यात्मज्ञो हि राजा सहजशारीरमानसागन्तुभिर्दोषैर्न बाध्यते । मनइन्द्रियाणि विषया भोगायतनमित्यात्मारामः । यत्राहमित्युपचरितप्रत्ययः स आत्मा । असत्यात्मनि प्रेत्यभावे विदुषां ख

---

१ राजा गुणग्राही चेत् सत्य भाषणम् श्रेयोवहम् । नान्यथा । २ आत्मा च– मनश्च–मरुत् प्राणश्च–एतेषा सम.–तुल्य य समायोग सम्यक् योजन एतल्लक्षण अद्ध्यात्मयोग' । अत्रआत्मशद्धेन देह क्षेत्रज्ञो वापि ग्राह्य ।३ सहजा भीरुत्वादय । शारीग व्याध्यादयः । मानसा चिन्तादय । आगन्तव शत्रुकृतापकारादयश्च–तैर्न पीड्यते । ४ आत्माआराम इव रमणस्थान यस्य स–आत्माराम

यश्चात्मव्यतिरेकेण किञ्चिद्विश्व न पश्यति ।
आत्माराम स विज्ञेय' स्वात्मयोगपरायण ॥

इत्युक्तलक्षण'।अतएव दोषैर्न बाध्यते।अहम्प्रत्ययस्य यत्र उपचारो भवति स आत्मा । अहम्प्रत्ययविषय इत्यर्थ ।

आत्मान चेद्विजानीयादहमस्मीति पुरुष. ।

इति श्रुते । अत्र बहूनां विप्रतिपत्तय । तथाहि । चैतन्यविशिष्टदेहएव आत्मा–इति पामरा लोकायताश्च । अन्येतु चेतनानीन्द्रियाण्येव आत्मेति । अपरेतु केवले मनसि विज्ञानाश्रयत्वादहम्प्रत्ययालम्बनत्वाच–मन एव आत्मेति । विज्ञानवादिनस्तु विज्ञानमेवात्मेति मन्यन्ते । शून्यमेवात्मतत्व इति माध्यमिका आहुः । देहादिव्यतिरिक्त समागी कर्ता भोक्ता इति मीमांसका'।भोक्तैव केवल न कर्ता–इति च साङ्ख्याः । अस्ति तद्व्यतिरिक्त' सर्वज्ञ' सर्वशक्तिरिति वैशेषिका योगा नैय्यायिकाश्चेतिसङ्क्षेपः। विस्तरस्तु तत्तद्दर्शनेभ्योऽवगन्तव्य इति दिक्। ६ अनात्मपक्षस्वीकारे विदुषां–नतु प्राकृतानां–पारलौकिकमनुष्ठान व्यर्थ स्यात् । तन्न युज्यते निष्फलानुष्ठाने विदुषां प्रवृत्तिः । अतोऽस्त्येव आत्मा ।

लु विफलं सर्वमनुष्ठानम् । यतः स्मृत्यवमर्शनं ऊहापोहनं शिक्षालापग्रहणं च भवति तन्मनः । आत्मनो विषयाऽनुभवद्वाराणीन्द्रियाणि । शब्द-स्पर्श-रूप-रस गन्धा हि विषयाः । समाधीन्द्रियद्वारेण विप्रकृष्ट-सन्निकृष्टार्थावबोधो ज्ञानम् । सुख प्रीतिः । तत्सुखमपि न सुखं, यत्र नास्ति मनोनिर्वृतिः । अभ्यासाऽभिमान-सम्प्रत्यय-विषयाः सुखस्य कारणानि । क्रियातिशयपरिपाकहेतुरभ्यासः । प्रश्रयसत्कारादिलाभेनात्मन उत्कर्षसम्भावनमभिमानः । अतद्गुणे वस्तुनि तद्गुणत्वेनाभिनिवेशः सम्प्रत्ययः । इन्द्रिय-मनःसन्तर्पणो भावो विषयः । दुःखमप्रीतिः । तद्दुःखमपि न दुःखं, यत्र न सङ्क्लिश्यते मनः । दुःख चतुर्विधम् । सहजं दोषजमागन्तुकमन्तरङ्गजं चेति । सहजं क्षुत्तर्ष-पीडा-मनोभूभवामेति । न्यक्काराऽवज्ञेच्छाविघातादिसमुत्थमन्तरङ्गजम् । न तस्य ऐहिकमामुत्रिकं वा फलमस्ति, यः क्लेशायासाभ्यां भवति विक्लवप्रकृतिः। स किम्पुरुषः, यस्य महायोगेष्वपि धनुष इवाधिकं न जायते बलम् । आगामिक्रियाहेतुरभिलाषो वाञ्छा । आत्मप्रत्यवायेभ्यः परप्रत्यावर्तनहेतुर्द्वेषः । अनभिलाषा-हिताहितप्राप्तिपरिहा-

१ मन्यते ऽनेन इति मनः । तच्च सर्वेन्द्रियप्रवर्तकं अन्तरिन्द्रियमिति नैयायिकाः । सङ्कल्प-विकल्पवृत्तिमदन्तःकरण मन-इति वेदान्तिनः । २ इन्द्रस्य आत्मन' लिङ्गमिति, इन्द्रेण दुर्जय-इन्द्रियं इति वा । अथवा इन्द्रेण आत्मना दृष्ट, आत्मत्वेन अभिमतमित्यादि यथायथमूह्यम् । ३ वक्ष्यमाणलक्षणा अभ्यासादयः सुखप्राप्तेः कारणानि भवन्ति । ४ स एव गुणो यस्य तत् तद्गुण, तद्गुण न भवतीत्यतद्गुण तस्मिन् तद्गुणत्वेन अभिनिवेशः । ५ यानि तु सुखोत्पत्तेः कारणानि भवन्ति तान्येव विपरीततया प्राप्तानि दुःखस्यापि कारणानि भवन्ति । ६ दोषज दोषैः रोगादिभिः जातम् । आगन्तुकं आकस्मिकैः स्खलनादिभिर्जातम् । ७ कुत्सितः पुरुषः किम्पुरुषः । ८ यथाह्यचेतनस्य धनुषः महति अल्पे वा युद्धादिप्रसङ्गे अधिक न्यून वा बलं न जायते, तथा महत्यपि कार्यगौरवे यस्य पुरुषस्य बलाधिक्य न जायते स किम्पुरुषः । ९ परस्य प्रत्यावर्तन निवारणं, तस्य यो हेतुः स द्वेषः । १० अभिलाषराहित्यम् ।

र उत्साहः। प्रयत्नपरिनिमित्तको भावः सातिशयलाभः संस्कारः। अनेककर्माभ्यासवासनावशात्सद्योजातादीनां स्तन्यपिपासादिकं येन क्रियत इति संस्कारः। भोगायतनं शरीरम्। ऐहिकव्यवहारप्रसाधनं परं लोकायतम्। अधीतलोकायतमतो हि राजा राष्ट्रकण्टकानुच्छेत्तुं यतते। न खल्वेकान्ततोयतीनामनवद्याऽस्ति क्रिया। एकान्तेन कारुण्यपरः करतलगतमप्यर्थं रक्षितुं न क्षमः। प्रशमैकचित्त को नाम न परिभवति? । अपराधकारिषु शमो यतीनां भूषणं, न भूपतीनाम्। धिक् त पुरुषं यस्यात्मशक्त्या न स्तः कोप-प्रसादौ। स जीवन्नापि मृत एव, यो न विक्रमति प्रतिकूलेषु। भस्मनि वा तैजसे वा को नाम निःशङ्कं न दधाति पदम्? । तत्पापमपि न पापं, यत्र महान्धर्मानुबन्धः। अन्यथा पुनर्नरकान्त राज्यम्। बन्धनान्तो नियोगः। विपदन्ता नाम खलमैत्री। मरणान्तः स्त्रीषु विश्वासः।

---

१ लोकायतमत तु।

यावज्जीवं सुख जीवेत् नास्ति मृत्योरगोचरः।
भस्मीभूतस्य देहस्य पुनरागमन कुतः? ॥

इति। अर्थकामावेव पुरुषार्थौ। देह एव आत्मा इत्यादि। प्रायेण हि सर्वप्राणिनां तावत् इदमेवाभिमतम्। एतन्मतानुसरणेनैव ऐहिकसुखसाधनादौ यत्नवान् भवति राजा। २ एकान्ततोयतीनां जितेन्द्रियत्वात् सर्वदा काम-क्रोधादिरहितानाम्। ३ एकान्तेन कारुण्यपरः केवल दयालुः। ४ सर्वोऽपि परिभवत्येवेति शेषः। ५ प्रतिकूलेषु शत्रुषु न विक्रमति तेषां पराभव न करोति। तदुक्त शिशुपालवधे।

माजीवन्यः परावज्ञादुःखदग्धोऽपि जीवति।
तस्याऽजननिरेवास्तु जननीक्लेशकारिणः ॥

इति। ६ नरकान्त नरकफलमित्यर्थः। ७ मरणपरिणामी।

इत्यान्वीक्षिकीसमुद्देशः । ६ ।

---

चत्वारो वेदाः शिक्षा कल्पो व्याकरणं छन्दो विचिति-र्ज्योतिषं निरुक्तं इति षडङ्गानि इतिहास-पुराण-न्याय—मीमांसाश्चेति चतुर्दश विद्यास्थानानि । त्रयीतः खलु वर्णाश्रमाचाराणां धर्माधर्मव्यवस्था । स्वपक्षानुरागप्रवृत्ताः सर्वेऽपि समवायिनो लोकव्यवहारेष्वधिक्रियन्ते । धर्मशास्त्राणि स्मृतयो वेदार्थसङ्ग्रहाद्वेदा एव । अध्ययनं यजनं च ब्राह्मण-क्षत्रिय-विशां समानो धर्मः । त्रयो वर्णा द्विजातयः । अध्यापनं याजनं प्रतिग्रहश्च ब्राह्मणानामेव । भूतसंरक्षणं शस्त्रोपजीवनं सत्पुरुषोपकृतिर्दीनोद्धरणं रणेऽपलायनं चेति क्षत्रियाणाम् । पण्यवार्ताजीवनं वैश्यानाम् । कारु-कुशीलवकर्म शकटोपवाहनं च शूद्राणाम् । सत्कृतपरिणय-

---

१ कल्पसूत्राणि बौधायनादीनि । २ एतानि चतुर्दश विद्यायाः धर्मस्यापि च स्थानानि भवन्ति । यथाह याज्ञवल्क्यः ।

पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्गविस्तरः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

इति । ३ वेदानामविरोधेन धर्मशास्त्रादीनां प्रामाण्य अतस्तेऽपि वेदा एव । वेदतुल्यत्वात् । प्रपञ्चित चैतत्पूर्वमीमांसायां शबरभाष्ये अर्थवादाधिकरणेत्यल विस्तरेण । ४ अत्र मूले दानाख्य तृतीयं कर्म न परिगणितम् । तथापि—

प्रजाना रक्षणं दानमाज्याऽध्ययनमेव च ॥ ८९ ॥
पशूनां रक्षण दानमीज्याऽध्ययनमेव च ॥ ९० ॥

इति मनुना क्षत्रियवैश्ययोरपि अविशेषेण दानाधिकारोक्तेः अध्ययनं यजनं दानं चेति त्रीणि कर्माणि ब्राह्मण-क्षत्रिय-विशां समानानि । ५ ब्राह्मण-क्षत्रिय-विशां उपनयनाधिकारित्वात् द्विजातित्वम् । ६ पर्वोक्तानि अध्ययनादीनि च एवं षट् कर्माणि ब्राह्मणस्य । ७ अध्ययनादीनि त्रीणि, पर्वोक्तानि भूतसंरक्षणादीनि च क्षत्रकर्माणि । आपदि "प्रतिग्रहवर्जं क्षत्रियस्य" इत्युक्तत्वात् प्रतिग्रहंविना अध्ययनादीनि पञ्च कर्माण्यधिकृतानि भवन्ति क्षत्रियस्य । ८ अध्ययनादीनि त्रीणि वाणिज्य गोरक्षणादिकं च वैश्यस्य । ९ शूद्राणां द्विजसेवाख्यमेकमेव कर्म ।

एकमेव तु शूद्राणां प्रभुः कर्म समादिशत् ॥

इति । एतेन दानादीनां न निषेधः ।

नव्यवहाराः सच्छूद्राः । आचारा ऽनवद्यत्वं शुचिरुपस्कारः शरीरशुद्धिश्च करोति शूद्रानपि देव-द्विजाति-तपस्विपरिकर्मसु योग्यान् । आनृशंस्यममृषाभाषित्वं, परस्वनिवृत्तिरिच्छानियमः, प्रातिलोम्याविवाहो, निषिद्धासु च स्त्रीषु ब्रह्मचर्यमिति सर्वेषां समानो धर्मः । आदित्याऽलोक इव धर्मः सर्वेषां साधारणः खलु ।

---

१ स्त्रीणामिति शेषः । येषां कुले स्त्रीणां सकृदेकवारमेव परिणयनस्य व्यवहारः ते सच्छूद्रा भवन्ति । लोकाचारमनुरुध्येदमुक्तम् । दृश्यते च अधुनातनेषु शूद्रेषु अयमेव सम्प्रदायः । ते हि स्त्रीपुनरुद्वाहवर्जनावर्जनादेव उत्तमाधमत्वं गणयन्ति । वस्तुतस्तु नेदमसाधारण लक्षण । यथाह मनुः ।

शुचिरुत्कृष्टशुश्रूषुर्मृदुवागनहङ्कृतः ।
ब्राह्मणाद्याश्रयो नित्यमुत्कृष्टां जातिमश्नुते ॥

इति । अत एव उत्तमवर्णसेवन-मृदुभाषणानहङ्कारादिसहकृतेनैव सकृत्परिणयनव्यवहारेण उत्कृष्टां जातिं सच्छूद्रत्व प्राप्नोति । न केवलं स्त्रीपुनरुद्वाहवर्जनमात्रेणेति दिक् । २ स्वगृहस्थितपदार्थादीनीउपस्कारशब्देनाभिधीयन्ते । ३ आनृशस्य दयालुत्वम् । प्रातिलोम्याऽविवाहः स्ववर्णाद्धीनवर्णासु स्त्रीषु विवाहवर्जनम् । निषिद्धासु वर्ज्यासु स्त्रीष्वगमनम् । इत्येष सर्ववर्णसाधारणो धर्मः । नारदेन तु साधारणधर्मस्य त्रिंशल्लक्षणान्युक्तानि । तानि यथा ।

सत्यं दया तपः शौच तितिक्षेक्षा शमो दमः ।
अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ॥
सन्तोषः समदृक् सेवा ग्राम्येहोपरमः शनैः ।
नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥
अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः ।
तेष्वात्मदेवताबुद्धिः सुतरां नृषु सर्वदा ॥
श्रवणं कीर्तन विष्णोः स्मरण महतां गतेः ।
सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम् ॥
नृणामयं परो धर्मः सर्वेषां समुदाहृतः ।
त्रिंशल्लक्षणवानेष सर्वात्मा येन तुष्यति ॥

इति । ४ आदित्यस्य सूर्यस्य आलोकः अवलोकनम् यथ सूर्यस्याव-

विशेषानुष्ठाने तु नियमः । निजागमोक्तमनुष्ठानमेव समस्तयतीनां स्वो धर्मः । धर्मव्यतिक्रमे यतीनां निजागमोक्तमेव प्रायश्चित्तम् । यो यस्मिन्देवे श्रद्धावान् स खलु तं देवं प्रतिष्ठापयेत् । अभक्तैः कृतःपूजोपचारः सद्यः शापाय भवति । वर्णाश्रमाणां स्वाचारप्रच्युतौ त्रयीतो विशुद्धिः । स्वस्वधर्मोऽसङ्करः प्रजां राजानं च त्रिवर्गेणोपसन्धत्ते । स किं राजा ?यो न रक्षति प्रजाः । स्वधर्म-

---

लोकनं सर्वेषामप्यविशेषात्समान तथैव पूर्वोक्तः सत्यादिः साधारणो धर्मः सर्वेषां समानः । न तत्र विधिविशेषो । विशेषानुष्ठाने विशेषस्य वर्ग-जाति-कुलादिप्रयुक्तधर्मस्य आचरणे तु यस्य यद्विहित तदेव तेनाचरितव्यमित्यादि-लक्षणो नियमः । 'वर्तते' इति शेषः ।

१ आगम्यते प्राप्यते ऽनेन इति आगमः शास्त्रम् । निजश्चासावागमश्चेति निजागमः । वर्णाश्रमाद्यनुरोधेन प्रमाणभत धर्मशास्त्रम् । तदुक्तस्य आचरणमेव सर्वेषां यतीनां स्वः स्वकीयः कर्तव्यतया स्थितः धर्मः । यतते मोक्षाय धर्माय स्वर्गाय वा स यतिः । परिव्राट्, धर्मनिष्ठः स्वर्गादिकामो वा यतिसञ्ज्ञको भवति । जातिधर्माद्यविशेषेण यस्य यतेः य आगमः प्रमाणभूतः तस्य तदुक्तानुष्ठान मुख्यो धर्म इति फलितो ऽर्थः । २ धर्मातिक्रमे यतेः तदागमोक्तमेव प्रायश्चित्त विहितम् । एवकारात् न राजदण्डादि । एतत्तु अदृष्टफलकस्य धर्मस्यातिक्रमे एव । न दृष्टफलके । तत्र तु राजदण्डस्य प्राप्तिर्भवत्येव । नोचेल्लोकस्थित्युच्छेदप्रसङ्गः । मन्वादिभिरन्यैर्वा शास्त्रप्रणेतृभिरुक्तानां अष्टादशानां व्यवहारपदानां यत्र प्राप्तिर्न भवति तादृशस्याधर्मस्यानुष्ठाने निजागमोक्त प्रायश्चित्तेन शुद्धिर्भवति । अन्यथा राजदण्डेनैवेतिसङ्क्षेपः । ३ विनाशाय कारण भवति । ४ अत्र वर्णाश्रमशब्दौ प्राधान्यार्थौ ब्राह्मण-वसिष्ठादिशब्दवत् । 'त्रयीतः' वेदत्रयात् तदुक्तानुष्ठानेन शुद्धिः भवति । एतत्तु वेदप्रमाणकधर्मिणामेव । अन्येषां तु तत्तच्छास्त्रानुसारतो विशुद्धिः । ५ 'त्रिवर्गेण' धर्मार्थकामैः 'उपसन्धत्ते' उपयोजयति । धर्मार्थ-कामयुक्तान् करोतीत्यर्थः । ६ यः प्रजाः न रक्षति स किं राजा भवति? अपि तु नेत्यर्थः । अथ वा यः प्रजाः न रक्षति स 'किं राजा' कुकुत्सितो राजेत्यर्थः ।

मतिक्रामतां सर्वेषां पार्थिवो गुरुः । परिपालको हि राजा सर्वेषां धर्माणां षष्ठांशमाप्नोति । यदाह वैवस्वतो मनुः । "उञ्छषड्भागप्रदानेन वनस्था अपि तपस्विनो राजानं सम्भावयन्ति । तस्यैव तद्भूयात् यस्तान्गोपायति" इति । तदमङ्गलमपि नामङ्गलं, यत्रास्यात्मनो भक्तिः । संन्यस्याग्नि अग्निपरिग्रहांश्चाऽस्पृशन्नु-

१ धर्ममतिक्रामतां सर्वेषां स्वराज्यनिवासिनां भिन्नधर्मिणामपि राजैव 'गुरुः' शिक्षकः उपदेशकः नियामको वा भवति । यदाह मनुः—

स्वे स्वे धर्मे निविष्टानां सर्वेषामनुपूर्वशः ।
वर्णानामाश्रमाणां च राजासृष्टो ऽभिरक्षिता ॥

इति । २ प्रजाना यथाधर्म पालनकर्तैव राजा ताभिराचरितस्य धर्मस्य षष्ठमश लभते' नतु अरक्षकः अधर्मकारी वा । स तु "अरक्षकः करहारी ऽधमत्ति" इत्यादिवचनैः प्रजाकृतस्य पापस्यैव षष्ठाश प्राप्नोति । तदुक्त मनुना—

यदधीते यद्यजति यद्ददाति यदर्चति ।
तस्य षड्भागभाक् राजा सम्यग्भवति रक्षणात् ॥

इति । ३ अत्र मले 'वैवस्वतो मनुः' इति अय प्रमाद इति प्रतिभाति । वैवस्वतेन मनुनोक्त धर्मशास्त्र न कुत्राप्युपलभामहे । न च प्राचीनैरर्वाचीनैश्च निबन्धकारैरस्य कुत्राप्युल्लेखः कृतः । धर्मशास्त्रप्रवक्ता मनुस्तु स्वायम्भुवः । न तु वैवस्वतः । तत्किमय लेखकप्रमाद ? ग्रन्थकृत एव प्रमादो वेति न जानीमः । ४ 'उञ्छषड्भागप्रदानेन' "उञ्छ् कणश आदाने" पर्वतारण्यादिषु प्रतिनियतस्वामिकातिरिक्तेषु भूभागेषु गृहीतसस्येषु च क्षेत्रेषु अप्रतिहतावकाशेषु यत्र यत्र कणोपलब्धि. स्यात् तत्र तत्र कणशः समुच्चयनं उञ्छः । तस्य षष्ठांशप्रदानपूर्वक वनस्थाः तपस्विनः स्वाचरितस्य तपसः षष्ठांशेन राजान 'सम्भावयन्ति' वर्द्धयन्ति । तदुक्त मनुना—

सरक्ष्यमाणो राज्ञाऽय कुरुते धर्ममन्वहम् ।
तेनायुर्वर्द्धते राज्ञो द्रविण राष्ट्र मेव च ॥

इति । ५ 'यः' राजा 'तान्' तपस्विनः 'गोपायति' रक्षति तस्यैव 'तत्' तपस्विभिराचरित तपः 'भूयात्' भवेत् । यतो ऽरक्षितास्ते चरितुमक्षमाः । अतः परम्परासम्बन्धेन तस्य राज्ञि कर्तृत्वमनुषक्त भवतीतिभावः । ६ 'भक्तिः' श्रद्धा विश्वासो वा । यन्मनःप्रसादनकर तदेव मङ्गलमिति तात्पर्यम् ।

पासीत । स्नात्वा देवोपासनान्न किञ्चन स्पृशेत् । देवागारंगतःसर्वान्यतीनात्मसम्बान्धिनीश्च जरतीः पश्येत् । देवाकारो यतःपाषाणोऽपि नावमन्यते किं पुनर्मनुष्यः? । राजशासनस्य मृत्तिकायामिव को नाम लिङ्गिषु विचारः । यत्स्वयं मलिनोऽपि खलःप्रवर्द्धयत्येव क्षीरं सितं धेनूनाम् । न खलु परेषामाचारःस्वस्यपुण्यमाचारं लभते । नापि मनोविशुद्धिम् । दानादिप्रकृतिः प्रयेण ब्राह्मणानाम् ।

---

१ स्नानानन्तर प्रथम देवोपासनमेव कुर्यात् । नान्यत् स्पृशेत् । 'अस्पृश्य'मिति शेषः । २ देवागारे स्थितः सन् सर्वान् 'यतीन्' पूजादिकर्मकरान् । अत्र यतिशब्द उपलक्षणार्थः । ग्रन्थकृदय जैनः । तेषु हि प्रतिग्रहादिकर्मकर्तारः सर्वेऽपि यतय एव ( येषाञ्च भाषायां 'जति' सज्ञा ) । जरतीः वृद्धाः सम्बन्धिनः 'पश्येत्' सम्मानयेत् । ३ यतः देवाकार प्रापितः पाषाणोऽपि नावमन्यते । जनैः इति शेषः । देवशब्दोऽत्र पूज्यवाची । किं पुनर्मनुष्यो नावमन्तव्य इति वक्तव्यं ? अपि तु नेत्यर्थ. । ४ राजाज्ञाया मृत्तिकायामिव लिङ्गिषु कोऽपि विचारः तारतम्य नास्ति । यथा मृत्तिकायां सर्वाणि चिन्हानि सम्भवन्ति तथैव राजशासनस्य सर्वत्रापि व्याप्तिः । तद्धि सर्वान् शाधयतीत्यर्थ । ५ स्वय मलिनः 'खलः' पिण्याकं (महाराष्ट्रभाषाया 'पेंड', हिन्दिभाषाया 'खळ' इति च प्रसिद्धम् ) धेनूनां स्वत उत्कृष्ट शुभ्र क्षीर वर्धयति भक्षणेन । तथैव श्रूयते दृश्यते च लोके पिण्याकभक्षणात् गो-महिष्यादीनां पयोवृद्धिः । राजशासनं राजसतामसत्वात् स्वतो मलिनमपि धर्ममर्यादास्थापनरूप शुद्ध कार्य जनयतीत्यर्थः । ६ अन्येषामाचारः स्वस्य पुण्यमाचार 'न लभते' तुल्यतां न प्राप्नोति । न च मनसः शुद्धि च, अपितु भयावह एव भवति ।

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधन श्रेयः परधर्मो भयावहः ॥

इति गीतोक्तेः । ७ ब्राह्मणाना प्रायशो दानादिः स्वभावः । 'दैप्' शोधने इत्यस्माद्धातोरुत्पन्नः दानशब्दः शुद्धिमाचष्टे । दान शुद्धिः आदिशब्देन दया-दाक्षिण्यादीनां ग्रहणम् । ब्राह्मणस्य स्वभावत एव शुद्धयादयः । अथवा दानशब्दः दीयमानस्य धनादेर्वाचकः । आदिशब्देन यजनाध्यापनादयः । ब्राह्मणानां स्वभावत एव दानाद्यपेक्षा इति तात्पर्यम् ।

---

+ 'पुण्यमाचारं भजते किन्तु मनोविशुद्धिः' इति पाठान्तरम् ।

बलात्कारस्वभावः क्षत्रियाणाम् । निसर्गतः शाठ्यं किरातकानाम् । ऋजु-वक्रशीलता सहजा कृषीवलानाम् । दानावसानः कोपो ब्राह्मणानाम् । प्रणामावसानः कोपो गुरूणाम् । प्राणावसानः कोपः क्षत्रियाणाम् । प्रियवचनावधिकः कोपो वाणिजिकानाम् । उद्धारप्रदानं कोपोपशमो वैश्यानाम् । निश्चलैः परिचितैश्च सह व्यवहारो वणिजां निधिः । दण्डभयोपाधि वशीकरणं नीचानाम् ॥

## इति त्रयीसमुद्देशः । ७ ।

कृषिः पशुपालनं वाणिज्या चेति वार्ता । वार्तासमृद्धौ हि

१ बलात्कारकरण क्षत्रियाणां स्वभाविकमेव । २ 'किरातकाः' वणिजः । कीर्यन्ते धनानि येभिः ते किराताः । त एव किरातकाः । तेषां 'शाठ्य' कपट स्वभावत एव । ३ 'कृषीवलाः' कृषिकर्तारः उपलक्षणात् शूद्राः ऋजुः सरलः वक्रश्च तादृशस्वभावाः । ४ 'दानावसान' । दानपर्यन्तस्थायी । ब्राह्मणाना याचितवस्तुलाभावधिरेव कोपः । क्षणिक इत्यर्थः । ५ गुरूणा कोपः प्रणामपर्यन्त एव । प्रणामानन्तर प्रसादः ।

६ क्षत्रियाणां कोपः 'प्राणावसानः' आमरणान्तः । चिरकालस्थायीति यावत् । अथवा प्राणमवसाययतीति प्राणावसानः प्राणान्तकारी । य क प्रति क्षत्रियः कुपितश्चेत् प्राणहरणमकृत्वा नस्य कोपशान्तिर्न भवतीत्यभिप्रायः । ७ 'वाणिजिकानां व्यापारकर्तृणां न तु केवल वैश्यजातीयानामेव । कोपः प्रियभाषणपर्यन्तः । प्रियालापेन ते तुष्टा भवन्तीत्यर्थः । ८ उद्धारस्य ऋणस्य अधमर्णादिगृहीतार्थस्य वा प्रदानेन 'वैश्याना' कोपस्य उपशमः भवति । ९ निश्चलैः गृहक्षेत्रादिमत्वात् एकत्र स्थितिकृद्धि' परिचितैः विज्ञातायव्ययैश्च सह व्यवहारः ऋणप्रदानादिः । 'निधि': निधीयते ऽस्मिन्निति निधिः सञ्चयस्थानमित्यर्थः । १० दण्डस्य भय उपाधिः छद्म यस्य तत् 'दण्डभयोपाधि' नीचानां पुरुषाणां दण्डभयरूपो वशीकरणमस्त इत्यर्थः । "दण्डेन नीचः समुपैति मार्गम्" इत्याद्युक्तत्वात् ।

११ वृत्तिरस्ति अस्यामिति 'वार्ता' कृषिः, पशुपालनं वाणिज्यं चेति प्रजानां जीवनसाधनानि ।

सर्वाः समृद्धयो राज्ञाम्। तस्य खलु संसारे सुखं यस्य कृषिर्धेनवः शाकवाटचः सद्मन्युदपानं च विसाध्या । राज्ञस्तन्त्रपोषणे नियोगिनामुत्सवो महांश्च कोशक्षयः । नित्यं हि हिरण्यव्ययेन मेरुरपि क्षीयते । तत्र सदैव दुर्भिक्षं यत्र राजा विसाधयति । समुद्रस्यं पिपासायां कुतो हि जगति जलानि? । स्वयं जीवनं धनमपश्यतो महती हानिर्मनस्तापश्च । क्षुत्तर्षाप्रतीकारात्पापं च । वृद्ध-बाल-व्याधित-क्षीणान्-पशून्बान्धवानिव पोषयेत् । अतीव भारो महान् मार्गश्च पशूनामकाण्डे मरणकारणम् ।

---

१ जीवनसाधनसमृद्धौ राज्ञां सर्वाः समृद्धयो भवन्ति नेतरया । २ यस्य कृषिः, धेनवः, शाकारामाः, गृहे जलाशयश्च भवेत् तस्य गार्हस्थ्यं सुखं सुखप्रदं स्यात् । ३ 'तन्त्र' इतिकर्तव्यता ।"इति कर्तव्यतायां च" इति रान्तवर्गे मेदिनी । प्रधानकार्यमपि तन्त्रसञ्ज्ञकम् । अतः राज्ञ इतिकर्तव्यतायां प्रधानकार्ये वा बहूनां सेवकानां अपेक्षा भवति । तथा सति तेषा महानानन्दो जायते, परं तेन कोशस्य धनस्य क्षयः स्यात् । अत आवश्यककार्यार्थमेव भृत्यसङ्ग्रहः कर्तव्यः। न भूरिव्ययेन तेषा समुदायसङ्ग्रहः कार्य इत्यभिप्रायः ।४ कोशव्यये दोषमाह । नित्यं हिरण्यस्य व्ययेन मेरुरपि क्षीयते । किमुत राज्ञः कोशः? ५ 'तत्र' तस्मिन् राष्ट्रे सदैव दुर्भिक्ष भवति, यत्र राजा विसाधयति विशेषेण व्यय करोति । सदैव प्रजाभ्यः करादानादिना दुर्भिक्षं भवति इति भावः ।६ सागरो हि सर्वजलानां निधिः,।स एव यदि पिपासित स्यात्, तर्हि जगति जलानि कुत उपलभ्येरन् ? तस्य पिपासानिवारणपर्याप्तानां जलानामन्यत्राभावादिति भावः । ७ जीवनभूत धन अथवा जीवनं धनं चापश्यतो राज्ञः महती हानिः मनःसन्तापश्च । भवतीति शेष । ८ किञ्च प्रजानां क्षुत्तर्षयोरप्रतीकारात् वार्ताक्षयेण दुर्भिक्षेण च क्षुत्तृण्णिवृत्तिसाधनाभावात् । ९ असह्यभारवाहनेन महतो दूरस्य मार्गस्य अतिक्रामगेन च पशूनां बलीवर्दाश्वादीनां शकटादिवाहिनां

शुल्कवृद्धिबलात्पण्यग्रहणं च देशान्तरभाण्डानामप्रवेशो हेतुः । काष्ठपात्र्यामेकदैव राद्ध्यते (?) तुलामानयोरव्यवस्थापनं व्यवहारं दूषयति । वणिक्कृतो ऽर्घः स्थितानागन्तुकांश्च पीडयति । देश-काल-भाण्डापेक्षया वा सर्वार्घो भवेत् । पण्यतुला-मानविशुद्धौ तु राजा स्वयं जागर्यात् । न वणिग्भ्यः परे सन्ति पश्यतोहराः । स्पर्द्धया कृता मूल्यवृद्धिर्भाण्डेषु राज्ञः । यथोचितं तु मूल्यं भाण्डविक्रेतुः । अल्पद्रव्येण महाभाण्डं गृण्हतो मूल्या-

---

अकाले मरणं भवति । अतिभारवाहनं महतो मार्गस्य अतिक्रामण च पशूनां मरणप्रयोजकमिति भावः । १ 'शुल्क' मूल्य तस्य वृद्ध्या विक्रेतव्यवस्तुग्रहण अन्यदेशागतानां भाण्डाना वस्तूनां अप्रवेशाय कारण भवति । करादिना देशान्तरादागतानां वस्तूनां महर्घत्वे कृते तेषां स्वदेशे विक्रयो न भवति इति । अथवा 'शुल्कः' करः, स्वदेशीयवस्तूनां करादिना महर्घत्वे कृते तेषां देशान्तरे विक्रयो न भवति। ततश्च तस्य मूल्यादिद्वारा परदेशात् स्वदेशे धनागमोऽपि न भवति इति भावः । २ धान्यादिपरिमाणमते काष्ठपात्रं मापनक्रिया भवति । ३ 'तुला' तुलनसाधनं ( 'तराजू' इति भाषायां ) 'मानं' परिमाण गुञ्जा-द्रोणादि तयोः अशोधन, व्यवहार क्रय-विक्रयरूप दूषयति कपटाभिसन्धित करोति । अतो राज्ञा तच्छोधनं कार्यमिति भावः । ४ वणिजैः स्वेच्छया कृतो ऽर्घः पण्यवस्तुमूल्य तत्रस्थान् आगन्तुकाश्च विक्रेतॄन् पीडयति । वणिक्कृतमूल्याधिक्येन गृहीतॄणां धनव्ययेन ते उपद्रुता भवन्ति । ५ अतो राज्ञा विक्रेयवस्तुपरिमाणशुद्ध्यादौ स्वयमप्रमत्तेन भाव्यमिति तात्पर्यम् । ६ पश्यन्तमनादृत्य हरन्ति ते पश्यतोहराः । इतरे चोराः स्वामिनः परोक्षे द्रव्यादि मुष्णन्ति । इमे वणिजस्तु स्वामिसमक्षमेव हरन्ति अतस्तेभ्योऽप्यमी अधिका इत्यर्थः । ७ वणिग्भिः परस्य स्पर्द्धया यदि मूल्यस्य वृद्धिः कृता चेत् सा वृद्धिः राज्ञः भवति । भाण्डस्य उचितं मूल्यमेव विक्रेतुर्भवति । न तु वृद्धिः ।

विनाशेन तद्भाण्डं तु राज्ञः । अन्यायोपेक्षया सर्वे विनश्यन्ति । चोर-चरटाऽन्वयधमन-राजवल्लभाटविक-तलार-किराताक्षशालिक-नियोगि-ग्रामकूट-वार्ध्दुषिका हि राष्ट्रकण्टकाः । प्रतापवति कण्टकशोधनाधिकरणज्ञे राज्ञि न प्रभवन्ति । तेषु सर्वे अन्यायकृद्भ्यो वार्ध्दुषिकास्तत्रं कोशं देशं च विनाशयन्ति । कार्याकार्ययोर्नास्ति दाक्षिण्यम् । आमयमप्यौषधं पीयते । आहिद-

---

१ यदि केनचित् कपटादिना अल्पद्रव्येण महत् भाण्ड क्रीत तर्हि तदन्यायोपार्जितत्वाद्राज्ञ एव भवति । राज्ञा विक्रेत्रे तद्दत्त मूल्यं दत्वा तद्भाण्ड गृहीतव्यम् । २ एकेनापि कृतस्य अन्यायस्य उपेक्षया सर्वे विनश्यन्ति अतः राज्ञा अन्यायोपेक्षण न कर्तव्यमित्यर्थः । ३ चोराः प्रसिद्धा, चरटः गुप्तदूत विचित्रवेष-भाषादिभिः स्व रूप गूहयित्वा देश-नगर-ग्राम-गृहादिषु प्रविश्य तत्तत्गुप्तवृत्तान्तं राज्ञे आवदयन्ति ते चरटाः, अन्वय वश धमन्ति प्रख्यापयन्ति ते अन्वयधमनाः चारणादयः, राजवल्लभा राज्ञः प्रियाः, आटविका अरण्यरक्षणादौ नियुक्ताः, तल भुव एकदेश. तत् आसमन्तात् अरति रक्षतीति तलारः राज्ञा स्वराज्यं विभिन्नेषु लघुषु प्रदेशेषु नियुक्तो ऽधिकारी, किराताः भाषाया भिल्लसंज्ञका, अक्षैः पाशैः शालते शोभते ऽसो अक्षशालिकः द्यूतकरः, नियोगिनः अधिकारिणः, ग्रामस्य कूट इव कपटप्रधानत्वात् अनभिज्ञजनग्रहणे यन्त्रविशेष इव य स ग्रामकूटः (भाषायां 'पटवारी कुलकर्णी' इत्यभिध), वार्ध्दुषिको वणिक् धान्यादि वृद्ध्या य. अधमर्णाय ददाति स, एते चोरादयो एकादश राष्ट्रकण्टकाः कण्टकवदुपद्रवकर्तारः भवन्ति । ४ एते हि चोरादयः कण्टकाः प्रतापवति पूर्वोक्तकण्टकानां शोधने शुद्धौ निग्रहे वा यदधिकरणं—अधिक्रियते विचारेण आविष्क्रियते याथार्थ्यमस्मिन्निति अधिकरणं तज्जानातीति अधिकरणज्ञः तादृशे राज्ञि सति न प्रभवन्ति । ५ तेषु पूर्वोक्तेषु एकादशसु राष्ट्रकण्टकेषु वार्ध्दुषिकाः विशेषत उपद्रवकराः । यतस्ते हि अन्यायेन धान्यादिवृद्धिं गृहीत्वा प्रसिद्धतया अन्यायकरणेन तन्त्रं राष्ट्रव्यवहार, कोश अधमर्णानां धनसञ्चय, परम्परया देशं च विनाशयन्ति अतस्ते निग्राह्याः राज्ञा । ६ दाक्षिण्य सरलत्वम् ।

ष्टा स्वाङ्गुलिरपि छिद्यते ॥

इति वार्तासमुद्देशः । ८ ।

चिकित्सागम इव दोषविशुद्धिहेतुर्दण्डः । यथादोषं दण्डस्य प्रणयनं दण्डनीतिः । प्रजाहितार्थं राज्ञा दण्डः प्रणीयते, न धनार्थम् । स किं राजा वैद्यो वा, यः स्वाजीवाय प्रजासु दोषमन्वेषयति । दण्डद्यूताहवमृत-विस्मृत-चोर-दार-दारिक-प्रजाविप्लव–द्रव्याणि न राजा स्वयमुपभुञ्जीत । दुःप्रणीतो हि दण्डः काम-क्रोधाभ्यामज्ञानाद्वा सर्वजनविद्वेषं करोति । अप्रणीतो हि दण्डो मात्स्यन्यायमुद्भावयति । बलीयानबलं ग्रसते इति मात्स्यन्यायः ।

---

१ शेषस्याङ्गस्य रक्षणाय ।

२ चिकित्स्यते ऽनयेति चिकित्सा रोगस्य प्रतीकारः तस्याः आगमः शास्त्रं चिकित्सागमः। स यथा दोषाणां वात-पित्त-कफादीनां विशुद्धेर्हेतुर्भवति तथा दण्डोऽपि अपराधस्य दोषस्य विशुद्धौ हेतुर्भवति । ३ दण्डस्य औषधतुल्यत्वोक्तेः तत्प्रणेतुः राज्ञोऽपि वैद्यतुल्यत्वम् । यः स्वस्य आजीवाय जीविकार्थं प्रजासु लोकेषु दोषं रोगं अपराध च अन्वेषयति स राजा वैद्यश्च कुत्सितो भवति। द्रव्यसम्पादनार्थं लोकेषु अपराधसम्भावन रोगसम्भावन च राज्ञः वैद्यस्य च महद्दोषावहमित्यर्थः । ३ दण्डलब्ध, द्युतलब्ध, आहवे युद्धे मृतस्य धन, नदीरथ्यापणादिषु लोकैर्विस्मृतं, अनुपस्थितस्वामिक, चोरेण चौर्यकर्मणा अर्जितं, सुतपत्यादिदायाधिकारिविरहितायाः स्त्रियः धन, रक्षकहीनायाः कन्यायाः च धन राज्ञा गृहीतव्यम् पर तस्य उपभोगो न कार्यः । वापीकूपतडागादिषु तस्य विनियोगः कर्तव्य इत्यर्थः । ४ दुःप्रणीतः दण्डप्रणयनरीतिमुल्लङ्घ्य प्रणीतः कामक्रोधाभ्यां प्रणीतः, अज्ञानात् कोऽपराधी कोऽनपराधीत्यादिविवेकमकृत्वैव प्रणीतः दण्डः सर्वजनविद्वेष करोति । ५ यदि च दण्डस्य प्रणयनमेव न कृतं तर्हि मत्स्यानां न्यायः उद्भवति । प्रजास्विति शेषः । बलीयान् अबलं ग्रसतेत्यर्थः ।

## इति दण्डनीतिसमुद्देशः । ९ ।

---

मन्त्रि-पुरोहित-सेनापतीनां यो युक्तमुक्तं करोति स अहार्यबुद्धिः[1] । असुगन्धमपि सूत्रं कुसुमसंसर्गात्किं नारोहति देवशिरांसि[2] । महद्भिः प्रतिष्ठितोऽश्मापि भवति देवः, किं पुनर्मनुष्यः[3] । तथा चानुश्रूयते विष्णुगुप्तानुग्रहात्किलाऽनधिकृतोऽपि चन्द्रगुप्तः साम्राज्यमवाप[4] । ब्राह्मण-क्षत्रिय-विशामन्यतमं स्वदेश-जन्माचाराभिजनविशुद्धं अव्यसनिनमव्यभिचारिणमधीताखिलव्यवहारतन्त्रमस्त्रज्ञमशेषोपाधिविशुद्धं मन्त्रिणं कुर्वीत[5] ।

---

१ अहार्या हर्तुमशक्या अभेद्या वा बुद्धिर्यस्य स अहार्यबुद्धिः । मन्त्रि-पुरोहित-सेनापतिभिः देश-कालाद्यनुरोधेन युक्तमुक्तं करोति स रिपुभिरपि अहार्यबुद्धिर्भवति । राजेति शेषः । २ उक्तमर्थं दृष्टान्तेन साधयति । सुगन्धरहितमपि सूत्रं पुष्पसंयोगात् यथा दुष्प्राप्ये देवशिरसि आरोहति, तथा अबुद्धिमानसहायोऽपि राजा मतिमतां मन्त्रिणामानुकूल्येन अजेयो भवतीत्यर्थः । ३ अचेतनः अश्मा प्रतिमादिरूपः महद्भिः विद्यादिगुणवद्भिः प्रतिष्ठापितश्चेत् देवत्वं प्राप्नोति सर्वेषां पूज्यो भवतीत्यर्थः । सचेतनः मनुष्यः राजा स्यादिति किं वक्तव्यम्? स्यादेवेत्यर्थः । ४ उक्तमर्थमैतिह्येन द्रढयति । चन्द्रगुप्तो नाम नन्दस्य राज्ञः दास्याः पुत्रः । स राज्यानधिकार्यपि चाणक्यापरपर्यायस्य कौटिल्यस्य विष्णुगुप्तस्यानुग्रहात् साम्राज्यमवाप । अपमानजनितरोषकषायितेन चाणक्येन विषकन्याभिधां कृत्यां निर्माय नन्दान्घातयित्वा स्वाज्ञावशवर्तिने चन्द्रगुप्ताय साम्राज्यं दत्तमिति 'कथासरित्सागरे' विशाखदत्तविरचिते 'मुद्राराक्षसे' च प्रसिद्धमिति विस्तरभयादत्र नोक्तम् । ५ विद्याधिकारित्वात् विशदबुद्धिं ब्राह्मण-क्षत्रिय-विशामन्यतमं एकं अर्थात्-द्विजं देशेन जन्मना आचारेण कुलेन च विशुद्धं आर्यावर्तादिपवित्रदेशभवं स्वदेशजम्

सर्वपक्षपातेषु स्वदेशपक्षपातो महान् । विषनिषेक इव दुराचारः सर्वानपि गुणान्दूषयति । दुःपरिजनो मोहेन कुतो ऽप्यकृत्यान्न जुगुप्सते । सव्यसनसचिवो हि राजा रूढव्यालगज इव सुलभापायः । किं तेन केनापि यो विपादि नोपतिष्ठते ।

---

नतु विदेशीयम् । विवाहितसमानवर्णमातापितृभ्यां जात, सदाचारपरायण, श्रोत्रियाद्युत्तमकुले भवम् । एतादृश विशुद्धमित्यर्थः । अव्यसनिनं मद्य-द्यूतादिव्यसनरहित, अव्यभिचारिण व्यभिचारः स्वाम्यन्तराश्रयण तेन रहित अर्थात् स्वामिनि एकनिष्ठमित्यर्थः । व्यवहारतन्त्र व्यवहारशास्त्र "तन्त्र प्रधाने सिद्धान्ते" इत्यमरः । तदर्धात येन सः व्यवहारनिपुण इत्यर्थः । अस्त्रज्ञ युद्धविद्यानिपुण अशेषोपधिविशुद्ध अन्यथास्थितस्य वस्तुनोऽन्यथाप्रकाशनरूप कपटमुपधिः । "कपटोऽस्त्री व्याज-दम्भोपधयश्छद्म कैतवं" इत्यमरः । अशेषोपधिभिरशेषैः कपटैः विशुद्ध रहितमित्यर्थः । कपटज्ञमपि स्वयमकपटिनमिति भावः । एतादृश उक्तविशेषणविशिष्ट मन्त्रिण कुर्वीत नान्यम् ।

१ स्वदेशीयमेव मन्त्रिणं कुर्वीत इत्युक्त तत्र हेतुमाह । सर्वेष्वपि पक्षपातेषु स्वदेशपक्षपात एव बलीयान् । अन्यदेशीयो मन्त्री स्वदेशपक्षपातेन कदाचिदहितमप्याचरेत् अतः स्वदेशीय एव कार्य । यत्र च अन्यदेशीयस्य मन्त्रिणोऽपि निषेधः तत्र अन्यदेशीयस्य धर्माचारादिभिस्सुतरां भिन्नस्य प्रभोः कुतो वा ग्रहण तस्य शासने तिष्ठतां प्रजाना कुतस्तरा वा सुखलेशः? स्वदेशपक्षपाताग्रह गृहीतेन राज्ञा कियद्वा तेषा हित कर्तव्य स्यात्? न किमपित्यलमप्रसक्तेन।

२ विषनिषेकः विषबिन्दुप्रक्षेपः यथा मधुरमपि पयो नाशयति तथा दुराचारो मन्त्री सर्वानपि गुणान् सत्यास्तेयादीन् नाशयेत् । ३ दुष्टः परिजनः सेवकजनः यस्य स राजा । ४ व्यसनैः द्यूत-पानादिभिः सहिताः सव्यसनाः एतादृशाः सचिवा यस्य स राजा व्यालगजः दुष्टगजः स इव "व्यालो दुष्टगजे सर्पे" इति लांतवर्गे मेदिनी । सुलभाऽपायः । विपत्काले नोपतिष्ठते न सहायो भवति अनायासेन प्राप्यो भवति इत्यर्थः । ५ तेन केनापि मन्त्रिणा मित्रेण सेवकेन वा किं न किमपीत्यर्थः ।

पात्रसमितौ हि सुलभो लोकः । किं तेन भक्तेन तस्य भक्त्या वा यो न वेत्ति स्वामिनो हितोपायमहितप्रतीकारं वा । किं तेन सहायेन यस्यात्मरक्षणेऽप्यस्त्रं न प्रभवति । धर्मार्थ-काम-न-य*व्याजेन परचित्तपरीक्षणमुपधा । अकुलीनेषु नास्त्यपवादाद्भयम् । अलर्कविषवत्कालं प्राप्य विकुर्वते विजातयः । तदमृतस्य विषत्वं यः खलु कुलीनेषु दोषसम्भवः । घटप्रदीपवत्तज्ज्ञानं यन्न परप्र-

१ पात्राणां भोजनपात्राणां समितिः सभा "सभा-समिति-ससदः" इत्यमरः । तस्या । भोजनार्थं बहवो मिलन्तीति भाव. । २ भक्तोऽपि हितोपायमहितप्रतीकार च अजानन्न किञ्चित्करः । उपायानभिज्ञस्य केवलया भक्त्या कार्यं न सिद्ध्यति । अतः उपायविदेव भक्तोऽपेक्षितः । अतो ऽधीताखिलव्यवहारतन्त्र एव मन्त्री कर्तव्य इत्यर्थः । ३ यस्य करधृतमप्यस्त्रं खड्गादि न समर्थं भवति तेन कातरेण सहायेनापि किं? अथ वा यस्य ज्ञानरूपमस्त्रं काम-क्रोधादिशत्रुभ्य आत्मरक्षणे न प्रभवति तादृशेन सहायेनापि किं ? न किमपि। अतो ऽस्त्रज्ञ एव मन्त्री कर्तव्य इत्यर्थ. ।४ धर्म-अर्थ-काम-नयानां निमित्त कृत्वा परेषां चित्तस्य परीक्षाकरण उपधा सञ्ज्ञक भवति अतोऽशेषोपधिविशुद्ध मन्त्रिण कुर्यात् । ५ यतोऽकुलीनस्य लोकापवादात् भय नास्ति अत. स अकार्यमपि कुर्यात् । तस्मादकुलीन मन्त्रिण न कुर्वीत । ६ अलर्कः श्वा तस्य विष यथा दशनसमकालमेव न विकुर्वति किन्तु कालान्तरे । तथैव विजातयः हीनजातय काल प्राप्य विकुर्वते । अतो हीनजातीय मन्त्रिण न कुर्वीत । ७ कुलीना अपि क्वचित् कदाचिद्विकुर्वन्तो दृश्यन्ते इति चेत्तत्राह । कुलीनेषु दोषसम्भव इति । कुलीनेषु दोषाणा विश्वासघातादीना क्वचित्कदाचित्सम्भवो दृश्येच्चेत्तदमृतस्य विषत्वमिव । यथा अमृतस्य विषत्व कदापि न सम्भवति तथापि' 'अमृतं वा विषमीश्वरेच्छया' इतिवदपवादतुल्यमित्यर्थः । ८ यज्ज्ञान परेषां प्रतिबोधाय सशय-विपर्यासादिनिवृत्तये न भवति तन्मृण्म-

* 'भयव्याजेन' इति पाठान्तरं ।

तिबोधाय । तस्य शस्त्रमिव शास्त्रं निष्फलं, येषां प्रतिपक्षदर्शनाद्भयमन्वयन्ति चेतांसि। न तदस्त्रं शास्त्रं वा, आत्मपरिभवाभावाय यन्नहन्ति परेषां प्रसरम्। न हि गली बलीवर्दो भारकर्मणि केनापि युज्यते। मन्त्रपूर्वः सर्वोऽप्यारम्भः क्षितिपतीनाम्। अनुपलब्धस्य ज्ञानं, उपलब्धस्य निश्चयः, निश्चितस्य बलाधानं, अर्थस्य द्वैधस्य संशयच्छेदनं, एकदेशलब्धस्याशेषोपलब्धिरिति मन्त्रसाध्यमेतत्। अकृतारम्भस्यारम्भं आरब्धस्यानुष्ठानं अनुष्ठितस्य विशेषविनियोगसम्पदं कर्मसु ये कुर्युस्ते

---

य घटस्थितदिपवत् नान्योपकारक घटे दीपे सत्यपि तद्दर्शनार्थं दीपान्तरस्यापेक्षितत्वात् स्वोपकारकमपि न भवतीत्यर्थः।

१ येषां चेतांसि प्रतिपक्षस्य शत्रोः दर्शनात् भयमन्वयन्ति। तेषां वीराणां शस्त्रमिव प्रतिपक्षस्य वादिनः दर्शनात् बिभ्यतां पण्डितानां शास्त्रमपि निष्फलमेव भवतीत्यर्थः। २ परेषां शत्रूणां वादिनां च, प्रसरं वृद्धिं कोटिक्रमं च आत्मनः पराभवस्य अभावाय निवृत्तये यत् न हन्ति, तदस्त्रमिव शास्त्रं न भवति उपयोगशून्यत्वात्। ३ गलः कण्ठः सोऽस्यास्तीति गली अमर्दितककुत् बलीवर्दः स यथा महतो भारस्य वहनकर्मणि केनापि न उपयुज्यते, तस्य अपक्कत्वात्। तथा अपक्कबुद्धेः शिरसि राजकार्यभारो न देय इति तात्पर्यम्। ४ एवं मन्त्रिणं उक्त्वा अधुना मन्त्रं माह। यतः क्षितिपतीनां राज्ञां सर्वोऽप्यारम्भः आरभ्यते इत्यारम्भः उद्यमः मन्त्रपूर्वको भवति अतो मन्त्र आवश्यक इत्यर्थः। ५ आरम्भमेव विशदयति। अनुपलब्धस्य अज्ञातस्य अप्राप्तस्य वा ज्ञानं उपलब्धिर्वा, उपलब्धस्य ज्ञातस्य प्राप्तस्य वा निश्चयः स्थिरीकरणं वा निश्चितस्य बलाधानं पुष्टिकरणं, अर्थस्य भूम्यादेः शब्दार्थस्य वा द्वैधं एकेन सन्धिरपरेण यानमित्येवं प्रकारकं द्विप्रकारत्वं वा भवति चेत् तस्य संशयच्छेदनं निश्चयः कर्तव्य इत्यर्थः। एकदेशं लब्धस्य पूर्णत्वेन प्राप्तिः इत्येतत् मन्त्रसाध्यं मन्त्रेण साधनीयम्।

मन्त्रिणः । कर्मणामारम्भोपायः पुरुष-द्रव्यसम्पत् देश-कालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति पञ्चाङ्गो मन्त्रः । आकाशे प्रतिशब्दवति चाश्रये न मन्त्रयेत् । मुखविकार-कराभिनयाभ्यां प्रतिध्वानेन वा मनःस्थमप्यर्थमभ्यूहन्ति विचक्षणाः । आकार्यसिद्धेरक्षितव्यो मन्त्रः । दिवा नक्तं चापरीक्ष्य मन्त्रयमाणस्य प्रच्छन्नो वा मत्तो वा भिनत्ति मन्त्रम् । श्रूयते हि किल

---

१ कर्मसु विविधेषु । न कृत. आरम्भो यस्य तदनारब्ध कार्यमित्यर्थः । तस्य ये आरम्भ कुर्वन्ति, आरब्धस्य अनुष्ठान आचरण कुर्वन्ति, अनुष्ठितस्य च विशेषतया विनियोगस्य क्रियासु प्रवर्तनस्य—अनेन इद कार्यमनेनेद कार्यमित्येतल्लक्षणाया व्यवस्थायाः सम्पद ये कुर्वन्ति ते मन्त्रिणः । भवन्तीति शेषः मन्त्रिभिर्विशेषविनियोगः कर्तव्य इत्यर्थः । २ अधुना मन्त्रस्य पञ्चाङ्गान्याह । विविधाना शत्रुनयादीनां कर्मणां आरम्भस्य उपाय, पुरुषाणा द्रव्याणां च सम्पत् सङ्ग्रह, देशस्य कालस्य च विभागः अनुकूल—प्रतिकूलत्वविचार., विनिपातस्य नाशस्य प्रतीकारः निवारण, कार्यस्य सिद्धिश्च इति पञ्च मन्त्रस्य अङ्गानि । ३ आकाशे अनावृतप्रदेशे, यत्र च प्रतिशब्दो भवति तादृशे आश्रये स्थाने न मन्त्रयेत् । ४ विचक्षणाः चतुराः पुरुषाः मुखविकारेण हस्ताद्यवयवानां अभिनयेन विक्षेपादिना प्रतिशब्देन च । अन्यस्येति शेषः । मनसि स्थितमपि अर्थमभिप्राय अभ्यूहन्ति तर्कयन्ति । ५ मन्त्र रक्षणस्यावधिमाह । कार्यस्य सिद्धिपर्यन्त मन्त्रो रक्षितव्यः अन्यथा कार्यसिद्धिर्न स्यादित्यर्थः । ६ दिवा वा रात्रौ वा अपरीक्ष्य स्थलशोधनमकृत्वा मन्त्रयमाणस्य मन्त्रभेदो भवेत् । यतः प्रच्छन्ना वा मनोन्मत्तादिवेषान्तरेण सञ्चरन्तः पुरुषा मन्त्र भेद कुर्वन्ति । अत. परीक्ष्य मन्त्रयेदिति भावः । ७ अत्रार्थे ऐतिह्यमाह । श्रूयते वृद्धमुखादिति शेषः । राज्ञो नन्दस्य पुत्र हिरण्यगुप्तो नाम मृगयां चरन् रात्रौ वैक मित्रत्वेन प्राप्त सुप्त पुरुषमब्रवीत् ।

रजन्यां वटवृक्षे प्रच्छन्नो वररुचिरप्रशिखेत्यस्य प्रश्नस्य पिशाचेभ्यो वृत्तान्तमुपलभ्य चतुरक्षरैराद्यैः श्लोकमेकं चकार—

अनेन तत्र पुत्रेण प्रसुप्तस्य वनान्तरे।

शिखामाक्रम्य पादेन खड्गेनोपहतं शिरः॥

इति। न तैः सह मन्त्रयेत्, येषां पक्षेष्वपकुर्यात्। अनायुक्तो न मन्त्रकाले तिष्ठेत्। श्रूयते हि शुक सारिकाभ्यामन्यैश्च तिर्यग्भिर्मन्त्रभेदः कृतः। मन्त्रभेदादुत्पन्नं व्यसनं दुःप्रतिविधेयं वा स्यात्। इङ्गितमाकारो मद प्रमोदः प्रमादः

---

म्रियमाणेन च तेन 'अप्रशिख' इत्युक्तम्। ततो मित्रद्रोहजनितेन पाप्मना सद्यालुप्तप्रज्ञः ग्रहगृहीत इवोन्मत्त इव च अप्रशिख अप्रशिखेति वदन्हिरण्यगुप्त इतस्ततो विचिन्वद्भिः पुरुषैः कथकथमप्यनीयत राज्ञो नन्दस्य सकाशम्। तत्र च अप्रशिखत्वस्यार्थमबुध्यमानो राजा मन्त्रि-पुरोहित-सदस्यानपृच्छत्। तदा तूष्णीम्भूतेष्वितरेषु वररुचि 'अहमस्यार्थं कथयिष्यामि' इति प्रतिज्ञाय रजन्यां वटवृक्षे प्रछन्नो भूत्वा पिशाचेभ्य इमं वृत्तान्तमुपलभ्य अप्रशिखेति चतुरक्षैराद्यैः 'अनेन तत्रे'ति श्लोकं रचयाम्बभूवेति। इयमेव कथा प्रकारान्तरेण कथासरित्सागरे कथापीठलम्बके पञ्चमे तरङ्गे ७९ तम श्लोकमारभ्य ९६ तमश्लोकपर्यन्तमुक्ता। सा तत एवावगन्तव्येत्यलं विस्तरेण।

१ येषां पक्षेषु अपकुर्यात् अनिष्टोत्पादनं कुर्यात् तैः सह न मन्त्रयेत् भेदभयादिति भाव.। २ अनायुक्त मन्त्रे अनियुक्तः कोऽपि। जन्तुरिति शेष। मन्त्रसमये तत्र न तिष्ठेत्। ३ यतो शुक सारिकादिभिस्तिर्यग्भिरपि मन्त्रभेदः कृत इति श्रूयते। वृद्धमुखादिति शेष। ४ किञ्च मन्त्रभेदादुत्पन्नं व्यसनं सङ्कट दुःखेनापि प्रतिविधातुमशक्यं भवेत्। तस्मात् सर्वथा मन्त्ररक्षणेऽप्रमत्तेन भाव्यमिति भावः।

निद्रा च मन्त्रभेदकारणानि । इङ्गितमन्यथावृत्तिः । कोप-प्रसादजनिता शारीरी विकृतिराकारः । पान-स्त्रीसङ्गादिजनितो हर्षो मदः । प्रमादो गोत्रस्खलनादिहेतुः, अन्यचिकीर्षितोऽन्यथा वृत्तिर्वा प्रमादः । उद्धृतमन्त्रो न दीर्घसूत्रः स्यात् । अनुष्ठानेच्छा विना केवलेन किं मन्त्रेण । न ह्यौषधिपरिज्ञानादेव व्याध्युपशम । नास्त्यविवेकात्परः प्राणिनां शत्रुः । आत्मसाध्यमन्येन कारयन् औषधमूल्यादेव व्याधिं चिकित्सति । यो

---

१ वक्ष्यमाणलक्षणानि इङ्गितादीनि षट् मन्त्र भेदस्य कारणानि । अतस्तेभ्योऽप्रमत्तः स्यादित्यर्थः । २ अन्यथा वृत्ति अभिप्रायव्यञ्जकदैहिकचेष्टा इङ्गितमित्युच्यते । ३ विकृतिः विकारः मुखवैवर्ण्यादिः आकार इत्युच्यते । ४ पान सुरापानम । ५ प्रमादः अनवधानता । “प्रमादोऽनवधानता” इत्यमरः । कर्तव्येऽकर्तव्यत्वधिया ततो निवृत्तिः, अकर्तव्ये च कर्तव्यत्वधिया तत्र प्रवृत्तिरित्येतल्लक्षणो वा । गोत्रं नाम तस्य स्खलनादिहेतुर्वा, चिकीर्षितान्यथावृत्तिर्वा प्रमाद इत्यभिधीयते ।६ मन्त्रे उद्धृते कृते सति तदनुष्ठानात् विलम्बो न कर्तव्य इत्यर्थः । ७ अनुष्ठानमाचरणमेव कर्तव्यम । केवलेन मन्त्रेण न किमपीत्यर्थ. ।८ यथा केवल औषधेः परिज्ञानादेव व्याधीनां उपशमो न भवति किन्तु औषधसेवनेनैव । तथा केवल मन्त्रणेनैव नार्थसिद्धिरपि किन्तु तदनुष्ठानेनैव इति भावः ।

९ एवं मन्त्रं सपरिकरमभिधाय अधुना अवान्तरसाधनान्याह । अविवेकात् विवेको भेदकधर्मेण ज्ञानं तदभावो ऽविवेकः तस्मादपरः प्राणिनां शत्रुर्नास्ति । अविवेकेन सर्वाणि कार्याणि विनश्यन्ति । ३ यः आत्मना स्वयमेव साध्यं कर्तव्यं कर्म अन्येन कारयेत् स औषधस्य मूल्यपरिज्ञानेनैव रोगस्य परिहारं इच्छति इति भावः ।

यत्प्रतिबद्धः स तेन सहोदयव्ययी । स्वामिनाऽधिष्ठितो मेषोऽपि सिंहायते । मन्त्रकाले मन्त्रिभिर्विगृह्य वादः स्वैरालापश्च न कर्तव्यः । लघुनोपायेन महतः कार्यस्य सिद्धिर्मन्त्रफलम् । न खलु तथा हस्तेनोत्थाप्यते ग्रावा यथा दारुणा । स मन्त्री शत्रुः, यो नृपेच्छया अकार्यमपि कार्यतयाऽनुशास्ति । वरं स्वामिनो मरणाद्दुःखं, न पुनरकार्योपदेशेन तद्विनाशः । पीयूषमपि पिबतः बालस्य किं न क्रियते कपालहननम्? । म-

---

१यः पुरुषः येन स्वामिना भृत्येन मित्रेण वा सम्बद्धः स तेन सहैव उदयव्ययी-उदय उत्कर्षः व्ययो नाशश्च यस्य । २ स्वामिना प्रभुणा अधिष्ठितः स्वीकृतः दुर्बलो मेषोऽपि सिंहायते सिंहवदाचरति बलवान्भवतीत्यर्थः । किमुत मनुष्य ? । ३ मन्त्रसमये मन्त्रयमाणैः मन्त्रिभिः विगृह्य कलहं कृत्वा वादः, स्वैरः स्वच्छन्दालापश्च न कर्तव्यः । कलहेन वैरोद्भवः । स्वैरालापेन चावज्ञानं भवेत् । ४ मन्त्रस्य मुख्य फलमाह । लघुना अल्पेन उपायेन महतः कार्यस्य सिद्धिर्मन्त्रस्य फलम् । न पुनरल्पेनाल्पस्य गुरुणा वा गुरोः कार्यस्य सिद्धिर्मन्त्र फलमिति वक्तुं शक्यते । तत्तु मन्त्रं विनापि सिद्ध्येदेव । ५ अल्पायासेन महतः कार्यस्य सिद्धिः मन्त्रं विना न सिद्ध्येदित्येतस्मिन्नर्थे दृष्टान्तमाह । यथा भूम्यां निखातः गुरुः ग्रावा तिर्यग्दारुणा झटिति अल्पायासेनोत्थापयितुं शक्यते, तथा हस्तेन गुरुणापि प्रयत्नेन उत्थापयितुं न शक्यते । एवं महदपि कार्यं मन्त्रेणाल्पायासेन सिद्ध्यति । न पुनरन्यथा इति भावः । ६ यः केवलं नृपस्य स्वामिनः छन्दोनुरोधार्थं नतु स्वाज्ञानेन । अकार्यमपि कार्यत्वेनोपदिशति स मन्त्री शत्रुः । अकार्यस्य नाशकरत्वात् । ७ तदिच्छाविरुद्धोपदेशेन क्रुद्धात् स्वामिनः सकाशात् स्वस्य मरणमपि श्रेष्ठम् । नतु तदिच्छासम्पादनार्थं अकार्योपदेशेन तस्य नाशः । ८ पीयूषं दुग्धं। तद्यदि अपथ्यं चेत् । कपालहननं अर्थात्ताडनम् । मातापित्रादिभिस्तत्पालकैरिति शेषः ।

न्त्रिणोऽद्वितीयराजहृदयत्वात् ते न केनापि संसर्गं कुर्युः । रा- ज्ञोऽनुग्रह-विग्रहावेव मन्त्रिणोऽनुग्रह-विग्रहौ । स दैवस्यापराधो न मन्त्रिणां, यत्सुघटितमपि कार्यं न घटेत । न खल्वसौ राजा- यो मन्त्रिणोऽतिक्रम्य वर्तते । सुविवेचितान्मन्त्राद्भवेदेव कार्य- सिद्धिर्यदि स्वामिनो दुराग्रहो न स्यात् । अविक्रमतो नीतिर्वे- णिकखड्गयष्टिरिव । नीतिर्यथावस्थितमर्थमुपलम्भयति । हिताहितप्राप्ति–परिहारौ तु पुरुषकारायत्तौ । अकालसहं कार्यं यशस्वी न विलम्बेन कुर्यात् । कालातिक्रमान्नखच्छेद्यम- पि कार्यं भवति कुठारच्छेद्यम् । को नाम सचेतनः सुखसाध्यं कार्यं कृच्छ्रसाध्यमसाध्यं वा कुर्यात् । एको मन्त्री न कर्तव्यः ।

---

१ संसर्ग स्नेहादिसम्बन्धम् । संसर्गेण हि निग्रहानुग्रहादौ कदाचिद्वैषम्यं स्यात् । २ राजा यस्य निग्रहमनुग्रहं वा करोति तावेव मन्त्रिणोऽपि । म- न्त्रिणा न पृथक्निग्रहानुग्रहौ कार्याविति भावः । अन्यथा राजा-स्वाधिकारग्र- हणेच्छुरयमिति मत्वा तं मन्त्रिणं न विश्वसेदिति भावः । ३ सुघटितं वि- चार्य मन्त्रपूर्वकं आरब्धम् । तत्र कार्यसिद्ध्यभावस्य दैवप्रातिकूल्यमेव कारणमिति भाव. । ४ अतिक्रम्य वर्तते मन्त्रिभिरुक्तं हितं न शृणोति ना- चरति च । ५ स्व–परबलाबलादिविवेचनपूर्वकमारब्धात् मन्त्रात् । ६ व- णिजस्य प्रहारादावकुशलस्य खड्गयष्टिर्यथा विफला भवति तथा विक्रममकु- र्वतो राज्ञ इति शेषः । नीतिर्वृथा भवति । ७ साध्यस्यार्थस्य स्वरूपं बोधय- तीत्यर्थः । ८ पुरुषकारः पुरुषकृतः प्रयत्नः तदायत्तौ तदधीनावित्यर्थः । ९ काल विलम्बं न सहत इत्यकालसहं त्वरितमनुष्ठेयम् । १० सुलभमपि कठिनं भवतीत्यर्थः । ११ सचेतनः सजीवः । न कोऽपीत्यर्थः

एको निरवग्रहश्चरति मुह्यति च कार्यकृच्छ्रेषु । द्वावपि मन्त्रिणौ न कर्तव्यौ, तौ संहतौ चरन्तौ भक्षयन्तौ गृहीतौ वा विनाशयतः। त्रयः पञ्च सप्त वा मन्त्रिणः कार्याः। विषमपुरुषसङ्घे हि दुर्लभमैकमत्यम्। बहवो मन्त्रिणो परस्परमतिभिरुत्कर्षयन्ति। स्वच्छन्दाश्च न विजृम्भन्ते। यद्बहुगुणं अनपायबहुलं च भवति तत्कार्यमनुष्ठेयम्, तदेव भुज्यते, यदेव परिणमति। यथोक्तगुणसमवायिनि एकस्मिन्युगले वा मन्त्रिणि नकोऽपि दोषः। न हि महानप्यन्धसमुदायो रूपमुपलभते। अवार्यवीर्यौ धौर्यौ किं महति भारे न नियुज्येते। बहुसहाये राज्ञि प्रसीदन्ति सर्वे मनोरथाः। एक एव पुरुषः केषु नाम कार्येष्वात्मानं वि-

---

१ निरवग्रहः विशृङ्खलः स्वतन्त्रत्वात् निष्प्रतिबन्धः चरति वर्तते निरङ्कुशो भवति, कार्यकृच्छ्रेषु कठिनेषु कार्येषु मुह्यति च "ज्ञातसारोऽपि खल्वेकः सन्दिग्धे कार्यवस्तुनि" इत्युक्तत्वात् अतः एको मन्त्री न कर्तव्य इत्यर्थः। २ संहतौ मिलितौ सन्तौ कदाचित् राजानमपि विनाशयतः अतो द्वावपि न कार्यौ। ३ सङ्ख्याया वैषम्ये हेतुमाह। त्रि-पञ्च-सप्तादिविषमसङ्ख्याकेषु पुरुषेषु अर्थान्मन्त्रिषु ऐकमत्यं दुर्लभं भवितुमशक्यमिति भावः। ४ बहवो मन्त्रिणः स्वस्वमतिप्रभावेन। स्वामिनमिति शेषः। उत्कर्षयन्ति उत्कर्षं प्रापयन्ति। ५ स्वयं स्वेच्छाचारिणश्च न भवन्ति। ६ बहवो गुणा लाभादयः यस्मात्। ७ परिणमति पक्वं भवति जीर्यते इति यावत्। ८ यथोक्तगुणानां समवायः विद्यते यस्मिन् तस्मिन् उक्तगुणविशिष्टे मन्त्रिणि एकस्मिन् युग्मे वा सत्यपि न दोषः। 'निरवग्रहत्वसहतत्वा' दिदोषाभावादित्यर्थः। ९ महानपि अन्धानां समुदायः रूपं न पश्यति, तथा यथोक्तगुणरहितानां मन्त्रिणां समुदायोऽपि कार्यं न पश्यति अतः सोऽकिञ्चित्कर इत्यर्थः। १० बलातिशयवन्तौ। धुर्यौ बलीवर्दौ। शकटादिष्विति शेषः।

भजते। किमेकशाखाशाखिनो महतोऽपि भवति छाया?। कार्यकाले दुर्लभः पुरुषसमवायः । दीप्ते गृहे कूपखननं कीदृशम्। न धनं पुरुषसङ्ग्रहाद्बहु मन्तव्यम्। सुक्षेत्रेषु बीजमिव कार्यपुरुषेषूप्तं धनं शतशः फलति। बुद्धावर्थे युद्धे च ये सहायास्ते कार्यपुरुषाः। खादनवेलायान्तु को नाम कस्य न सहायः। श्राद्ध इवाऽश्रोत्रियस्य न मन्त्रे मूर्खस्याधिकारोऽस्ति। किं नामान्धः पश्येत्। न चान्धेनाकृष्यमाणोऽन्धः समं पन्थानं प्रतिपद्यते। तदन्धकवर्नीय(?)काकतालीय वा यन्मूर्खमन्त्रादपि कचित्कार्यसिद्धिः। स घुणाक्षरन्यायो वा यन्मूर्खेषु कार्यपरिज्ञानम्।

---

१ एका शाखा यस्य शाखिनः वृक्षस्य तस्य सार्वकाल छाया न भविष्यति तथा एकसहायिनः राज्ञः कार्यसिद्धिर्न भवति । अतः कार्यपुरुषसमवायोऽपेक्षित इति भावः । २ पुरुषाणां कार्यकर्तृपुरुषाणां समवायः सम्मीलनम् । ३ यद्यपि भावि कार्यार्थं पुरुषसङ्ग्रहे धनव्ययो भवति तथापि स तेभ्यो बहु न मन्तव्य. । ४ तदेवाह । यतः कार्यपुरुषेषु तेषां भरणादिद्वारा उप्तं धनं सुक्षेत्रे बीजमिव शतशः फलति अतः धन पुरुषसङ्ग्रहाद्बहु न मन्तव्यम् । ५ कार्यपुरुषलक्षणमाह । बुद्धौ सदसद्विचारे अर्थे धने युद्धे च ये सहाया भवन्ति त एव कार्यपुरुषाः नेतरे । ६ श्रोत्रियः साङ्गवेदाध्ययनपूर्वकमाहिताग्निः तद्भिन्नस्य यथा श्राद्धेऽधिकारो नास्ति, तथा मूर्खस्य मन्त्रेऽधिकारो नास्ति । ७ कश्चित्कदाचिन्मूर्खमन्त्रेणापि कार्यसिद्धिर्भवति तथापि सा काकतालीय सदृशी । यथा कस्य चिद्वृक्षस्य वायुनाकम्पिता, शाखा काकस्थितिसमकालमेवाध पतति । तदवलोक्य तत्कारणमबुध्यमानः—काकेन ताली छिन्नेति कश्चिद्वदति तथापि न तन्नियत, तथा मूर्खमन्त्रेण कार्यसिद्धिरपि न नियता भवति अत. स वर्ज्य एव ।८ घुणाक्षरन्यायो यथा कीटः काष्ठं भक्षयन् तत्राक्षरलेखनहेतुमकुर्वन्नपि कानिचिदक्षरचिन्हानि कदाचित् दृश्यन्ते तथा मूर्खेषु कार्यपरिज्ञानं कदाचिद्भवति न नियतम् ।

अनालोकं लोचनमिवाशास्त्रं मनःकियद्वा पश्येत्। स्वामिप्रसादः सम्पदं करोति, न पुनराभिजात्यं पाण्डित्यं वा। हरकण्ठलग्नोऽपि कालकूटः कालकूट एव। स्ववधाय कृत्योत्थापनमिव मूर्खेषु राज्यस्य भारारोपणम्। अकार्यवेदिनः किं बहुनापि शास्त्रेण। गुणरहितं धनुः पिंजनादप्याधिकं(?)निकृष्टम्। चक्षुष्मत इव मन्त्रिणोऽपि यथार्थं दर्शनमेवात्मगौरवहेतु.। शस्त्राधिकारिणो न मन्त्राधिकारिणः स्युः। क्षत्रियपुत्रस्य प्रहरतोऽथायात्यवश्यन्तु परिमण्डनम्। शस्त्रोपजीविनां प्रायः कलहमन्तरेण भक्तं भुक्तमपि न जीर्यते। मन्त्राधिकारः स्वामिप्रसाद. शस्त्रोपजीवित्वं चेत्येकैकमपि पुरुषमुत्सेकयाति, किं पुनर्न समवायः।

---

१ अनालोक दर्शनशक्तिरहित लोचन नेत्रं यथा रूप न पश्यति तथा अशास्त्र शास्त्रसंस्काररहित मनः कियत् पश्येत् न कियदपित्यर्थ.। कार्यमिति शेष.। २ आभिजात्य सत्कुले जन्म। ३ स्वामिप्रसादेन सम्पत्प्राप्तावपि अकुलीनस्य हीनस्य हीनत्व नापैति। यथा सर्वलोकेश्वरस्य शिवस्य कण्ठे लग्न अतिप्रेमपात्रमपीति ध्वनिः। तथापि कालकूटसंज्ञकस्य विषस्य कालकूटत्वं नापयातम्। ४ कृत्या आभिचारिकमन्त्र–जप–हवनादिभिः भतपिशाचादिजननम्। ५ अकार्यवेदिनः अचतुरस्य। ६ यथार्थ दर्शन कार्यस्य तत्वेन. परिज्ञानम्। तदेव आत्मनः गौरवस्य महत्वस्य हेतुर्भवति। यथार्थदर्शनेन कार्यसिद्धिर्भवति कार्यसिद्ध्या च मन्त्रिणः गौरव भवतीत्यर्थः। ७ केवल शूरा ८ प्रहरतः युद्ध कुर्वतः क्षत्रियपुत्रस्य परिमण्डन गौरव आयात्येव प्राप्नोत्येव। ९ शास्त्रोपजीविनः शूरस्य भुजकण्डूतिनिवारणार्थं निष्कारण कलहायमानस्य। भक्त ओदन अर्थादनायासजर्यमपि भुक्तमन्न कलह विना न जीर्यते। कलहप्रिया एव ते इति भाव.। १० मन्त्राधिकार. अमात्यत्व, स्वामिनः राज्ञः प्रसादः। एतत्त्रय एकैकमपि प्राप्त चेत्पुरुषमुत्सेकयाति उन्मत्त करोति। किं पुनस्तेषां समुदाय. तेन त्ववश्य उन्मत्तो भवत्येव।

न लम्पटोऽधिकारी भवति । मन्त्रिणोऽर्थग्रहणलालसायां मतौ न राज्ञः कार्यमर्थो वा । वरणार्थं प्रेषितः स्वयं यदि कन्यां परिणयति, तदा वरयितुःस एव शरणम् । स्थाल्येव चेद्भक्तमश्नाति, ततः कुतो भोक्तुर्भुक्तिः । तावत्सर्वोऽपि शुचिर्निस्पृहो वा, यावन्न परवरस्त्रीदर्शनमर्थाधिगमो वा । अतिप्रवृद्धः कामस्तन्नास्ति, यन्न करोति । श्रूयते हि किल कामवशः प्रजापतिरात्मदुहितरि, हरिर्गोपवधूषु, हरः शन्तनुकलत्रेषु, सुरपतिर्गौतमभार्यायां, चन्द्रश्च बृहस्पतिपत्न्यां मनश्चकारेति । अर्थेषूपभोगरहितास्तरवोऽपि साभिलाषाः, किं पुनर्मनुष्याः । कस्य नाम न लाभाल्लोभः प्रवर्तते? । स खलु पुरुषः प्रत्यक्षं दैवं यस्य परस्वेष्विव

---

१ लम्पट. स्त्री-धनादिलोभी । अधिकारी अर्थादधिकार दाने योग्यो न भवति । २ अर्थस्य द्रव्यस्य ग्रहणे सम्पादने लालसाया आसक्ताया मतौ बुद्धौ राज्ञः कार्यं, तस्य अर्थस्य वा चिन्तनं कुतः न कुतोऽपीत्यर्थः।३ उक्तमर्थं दृष्टान्तेन साधयति।वरणेति।वरण शिष्टाचारानुष्ठानपूर्वक कन्यास्वीकारनिश्चयः तदर्थं प्रेषित' मातुल-बन्धु-पितृव्यादि. मित्रो वा।वरयितु वरस्य सःवरणार्थं प्रेषित पुरुष एव शरणम् । ४ दृष्टान्तान्तरमाह । भुक्तिः भोजनम् । ५ परस्य अन्यस्य वरस्त्रिय. दर्शन अर्थस्य द्रव्यस्य अधिगम प्राप्ति' वा न भवति, तावदेव शुचित्व निस्पृहत्व वा । ६ तन्नास्ति यन्न करोति।कामातुरः कार्यमकार्य वा सर्वमपि करोतीत्यर्थः । ७ प्रजापतिर्ब्रह्मा आत्मनः दुहितरि सरस्वत्याम् । शन्तनुकलत्रेषु गङ्गायाम् । गौतमस्य भार्या अहल्या तस्याम् । बृहस्पतेः पत्नी तारा तस्याम् । ८ तरवो वृक्षाः । अर्थेषु फल-पुष्पादिषु स्वयमुपभोगरहिता अपि साभिलाषाः भवन्ति किं पुनर्मनुष्याः अभिलाष युक्ता भवन्तीति वक्तव्यम् । ९ प्रत्यक्ष मूर्तिमान् देव एव न मनुष्य । परधन-परस्त्रीषु निःस्पृहत्वरूपस्य असाधारणस्य धर्मस्यानुष्ठानात् ।

परस्त्रीषु निस्पृहं चेतः । अदुष्टस्य हि दूषणं सुप्तव्यालप्रबोधनमिव । येन सह चित्तविनाशोऽभूत्, स सन्निहितो न कर्तव्यः । सकृद्विघटितं चेतः स्फटिकवलयमिव कः सन्धातुमीश्वरः । न महताऽप्युपकारेण तथा चित्तस्यानुरागो भवत्यल्पेनाप्यपकारेण । सूचीमुखसर्पवन्नानपकृत्य विरमन्त्यपराद्धाः । समायव्ययकार्यारम्भो रामसिकानाम् । बहुक्लेशेनाल्पफलः प्रारम्भो महामूर्खाणाम् । दोषभयात्कार्यानारम्भः कापुरुषाणाम् । मृगाः सन्तीति किं कृषिर्न कृष्यते । अजीर्णभयान्न खलु भोजनं परित्यज्यते । स खलु किं कोऽपीहाभूदस्ति भविष्यति वा यस्याप्रत्यवायः कार्यारम्भः । आत्मसंशयेन कार्यारम्भो बालहृदयानाम् । दूरंभीरुत्वमापन्नशूरत्वं च अमहापुरुषाणाम् । जलकेलिवन्मार्द-

---

१ अदुष्टस्य कार्यपुरुषस्य दूषणं सुप्तस्य व्यालस्य प्रबोधनं यथा द्वेषकर तथा द्वेषकरमित्यर्थः। २ चित्तस्य विनाशः-दुष्टोऽयमिति ग्रहः जातः तेन सहवासो न कार्यः। ३ तस्य हेतुमाह । सकृदेति। विघटितस्य चेतस. प्रतिसन्धान कर्तुमशक्यमित्यर्थः । ४ अल्पेनाप्यपकारेण यथा चित्तस्य अननुरागो भवति तथा महताप्युपकारेण अनुरागो न भवतीत्यर्थः । ५ रामसिकाः क्रोधेनाविचार्यकारिणः। तत्कृतकार्यारम्भे यावानायस्तावानेव व्ययः भवति । ६ कुत्सिताः पुरुषा कापुरुषाः भीरव इत्यर्थः । ७ यथा अजीर्णं भविष्यतीति भोजन न परित्यज्यते, तथा दोषभयात्कार्यारम्भो न त्याज्य इत्यर्थः । ८ प्रत्यवाय विना कस्यापि कालत्रयेऽपि कार्यारम्भो न भवति, अतः तद्विषये शङ्का न कर्तव्येत्यर्थः । ९ आत्मनः विषये संशयः आत्मसंशयः--तत्कार्य मद्धस्तेन भविष्यति न वेति सन्देह । बालमपक्वं हृदयं मन. येषां ते बालहृदयाः अविचारिण इत्यर्थः । १० दूरभीरुत्व दूरगमन विषये भीतिः, आपन्ने आपद्ग्रस्ते शौर्यदर्शनं च अमहापुरुषाणां हीनानामित्यर्थः ।

वोपेतः पृथुनपि भूभृतो भिनत्ति । प्रियंवदः शिखीव शदर्या(?) नपि द्विषत्सर्पानुत्सादयति । स महान्, यो विपत्सु धैर्यमवलम्बते । उत्तापकत्वं हि सर्वकार्यसिद्धीनां प्रथमोऽन्तरायः। शरद्घना इव ननु खलु वृथा गलगर्जितं कुर्वन्त्यकुलीनाः । नाविधाय अर्थमनर्थं वा हृदयं प्रकाशयन्ति महानुभावाः । क्षीरवृक्षवत्फलप्रदो महतामालापः । नीपवद्दुरारोहपादप इव दण्डाभियोगेन फलप्रदो

---

१ यथा जलं स्वतः मृदुभूतमपि उच्चप्रदेशान्निपतत् महान्तोऽपि भूभृतः पर्वतान् भिनत्ति । तथा स्वयं मृदुत्वेन वर्तमानः राजा समर्थानपि भूभृतः राजानः भिनत्ति भेदपूर्वकं नाशयति । २ शिखी मयूरः स यथा प्रियवाक् स्वशब्दश्रवणलोलुपान् सर्पानुत्सादयति तथा प्रियवाक् द्विषत उत्सादयति । अतः प्रियंवदेन भाव्यमिति भावः । ३ विपत्काले धर्यमेव महतां लक्षणम् । तदुक्त हरिणा ।

"*विपदि धैर्यमथाभ्युदये क्षमा ।*

सदसि वाक्पटुता युधि विक्रमः" ॥

इत्यादिना । ४ उत्तापकत्वं परेषामुपद्रवकत्वमतिक्रोधनत्वं वा । अन्तरायः विघ्नः । परसन्तापकस्य न किमपि कार्यं सिद्ध्यतीत्यर्थः । ५ शरदतौ मेघानां गर्जनैव श्रूयते, न वृष्टिः—तथा अकुलीनानां केवलं वल्गनेव श्रूयते, न कार्यारम्भः । नन्विति विस्मये । ६ स्वकीयं परकीय वा अर्थमनर्थं वा अविधाय अकृत्वा । महानुभावाः कृतबुद्धयः। हृदय हृदिस्थितमर्थं न प्रकाशयन्ति प्रसिद्ध कुर्वन्ति । ७ आलापः भाषणम् । ये क्षीरवन्तो वृक्षाः ते ऽवश्यं फलन्त्येव । तथा महतां पुरुषाणां भाषणं सफलमेव भवति । ८ नीपः यथा स्वय दुरारोहः। तस्य फलानि दण्डप्रहारैर्भूमौ पान्तयतीति लोके प्रसिद्धम् । स इव दण्डाभियोगेन दण्डप्रणयनेन । नीचप्रकृतिः फलप्रदो भवति । "दण्डेन नीचः समुपैति मार्दवम्" इति न्यायात् ।

भवति नीचप्रकृतिः । न स्वभावेन किमपि वस्तु सुन्दरमसुन्दरं वा, किन्तु यदेव यस्य प्रकृतितो भाति तदेव तस्य सुन्दरम् । न तथा कर्पूररेणुना प्रीतिः केतकीनां वा, यथाऽमेध्येन। अतिक्रोधस्य प्रभुत्वमग्नौ पतितं लवणमिव शतधा विशीर्यते । सर्वान् गुणान्निहन्त्यनुचितज्ञः । परस्य मर्मकथनं आत्मविक्रयः । तदजाकृपाणीयं यःपरेषु विश्वासः । क्षणिकः किञ्चित्किमपि न साधयति । स्वतन्त्रः सहकारित्वात्सर्वं नाशयति । अलसः सर्वकार्याणामनधिकारी । प्रमादवान्भवत्यवश्यं विद्विषां वशः ।

---

१ सुन्दरत्वासुन्दरत्वयोः कल्पितत्वात् स्वभावतः किमपि वस्तु सुन्दरमसुन्दर वा नास्ति । २ सर्वोऽपि स्व-स्वप्रकृत्यनुकूल वस्तु कामयते । यत् यस्य प्रिय भवति तदेव तस्य सुन्दर भवति । नात्र किमपि स्वाभाविकम् । ३ अत्र निदर्शनमाह । नेति। अमेध्येन विण्मूत्रादिना । मक्षिकादीनामिति शेषः । यथा प्रीतिः तथा कर्पूररजसा केतकी परागैर्वा न भवति । ४ अग्नौ पतितस्य लवणस्य अशा. यथा विकीर्णा भवन्ति,तथा क्रोधनस्यापि प्रभुत्वं विशीर्ण भवति । तस्य अशा विकीर्यन्ते इत्यर्थः ।५ उचित न जानातीत्यनुचितज्ञः युक्तायुक्तविवेकशून्य इत्यर्थः । 'अनुचित्तज्ञ' इति पाठे तु । अनु कार्यानन्तर चित्त जानाति इति अनुचित्तज्ञः कार्यविधानानन्तर प्रभोश्चिकीर्षितं जानाति यः पश्चाद्बुद्धिरित्यर्थः।६यो यस्मै स्वस्य मर्म कथयति सत स्वात्मान विक्रीणात्येव । मर्मज्ञः कदाचिद्विरुद्धश्चेदात्मान घातयिष्यतीति भिया सार्वकाल तच्छन्दानुवर्तनमेव कर्तव्य भवति मर्मकथयितुः । ७ 'अजाकृपाणीय' अजा छागी कृपाणः करवालः । अजायाः यथा कृपाणे विश्वासेन गलच्छेदो भवति तथा परेषु अज्ञातहृदयेषु योऽय विश्वासः तेन गलच्छेदो भविष्यति कदाचित् । ८ क्षणिकः क्षणिकचित्तः । ९ बहूनां कार्याणामेकसमयावच्छेदेनारम्भात् सर्वाण्यपि विनाशयति । १० अनवधानेन विद्विषां शत्रूणां वशः भवति ।

किमप्यात्मनोऽनुकूलं प्रतिकूलं च न कुर्यात् । प्राणादपि प्रत्यवायो न रक्षितव्यः । आत्मशक्तिमविजानतो बलवतासह विग्रहः क्षयकाले कीटकानां पक्षोत्थानमिव । कालमलभमानोऽपकर्तारि साधु वर्तेत । किन्नु खलु लोको न वहति मूर्ध्ना दग्धुमिन्धनम्? । नदीरयस्तीरतरूणामङ्घ्रिन्प्रक्षालयन्नप्युन्मूलयति । उत्सेको हस्तगतमपि कार्यं विनाशयति । नाल्प महद्वाप्यकोपोपायज्ञस्य । सरित्पूर' सममेको उन्मूलयति तीरजतृणं पुमान् । युक्तमुक्त बालादपि ग्राह्यम् । रवेरविषये किं न प्रकाशयति भंदीपः । अल्पमपि वातायनविवरं बहूनुपलम्भयति । पतिंवरा इव परार्थाः

१ प्रत्यवाये सत्यपि प्राणरक्षाप्रयुक्त कार्यमवश्य कर्तव्यमित्यर्थः । २ कीटकानां वम्रीणाम् । तेषां हि मरणसमये पक्षा उद्भवन्ति । जात पक्षाश्च ते दीपादौ पतित्वा म्रियन्ते । तद्वदात्मनः शक्ति अविज्ञाय बलवता सह विग्रहकरण मरणाय भवतीति भावः । ३ काल आत्मन. अनुकूल । अपकर्तरि शत्रौ साधु सम्यक् वर्तेत मैत्रीं कुर्यादित्यर्थः । ४अत्र निदर्शनमाह । किमिति । अनन्तर दग्धव्यान्यपीन्धनानि प्रथम मूर्ध्ना वाह्यन्त एव । ५ नद्याः जलस्य वेगः उन्मूलयितव्यानपि वृक्षान् प्रथममङ्घ्रिप्रक्षालनेन प्रसादयति। निर्धूतमूलांश्च तानुत्पाटयति । तस्मात्प्रथम मृदुनाभाव्यमित्यर्थः प्रक्षालयतीत्यनेन नम्रताया अतिशयो ध्वन्यते । ६ उत्सेको गर्वः उन्मत्तत्व वा ७ कोपशान्तेरुपायमविजानतः इदमल्पमिद महत् इति विवेको नास्ति । ८ तदेवाह । सरित्पूरः सममेव सर्वमुन्मूलयति । तथा क्रुद्धः पुमान् सर्वानपि नाशयति न तत्र विवेक इति भावः । ९ बालात् अज्ञात् । "बालादपि सुभाषितम्" इति न्यायात् । १० कदा ग्राह्य तदाह रवेरिति । यत्र रवे. सूर्यस्य प्रकाशो नास्ति तत्र दीपस्य प्रकाशः यथा, तथा ज्ञानवृद्धानामभावे बालादपि ग्राह्य नेतरत्र । ११ वातायन गवाक्षः स्वप्रकाशेन गृहान्तर्वर्तिनः पदार्थान् इति शेषः । उपलम्भयति प्रकाशयति ।

खलु वाचः, ताश्च निरर्थकं प्रकाश्यमानाः शपयन्त्यवश्यं जनयितारम् । तत्र युक्तमपि उक्तमनुक्तसमं यो न विशेषज्ञः। स खलु पिशाचकी पातकी वा, यःपरेऽनर्थिनि वाचमुदीरयति । विध्यायतः प्रदीपस्येव नयहीनस्य बुद्धिः । जीवोत्सर्गः स्वाप्रियदमभिलषतामेव बहुदोषेषु क्षणदुःखप्रदोपायो ऽनुग्रह एव । स्वामिदोष-स्वदोषाभ्यामुपहतवृत्तयः क्रुद्ध-लुब्ध-भीतावमानिताः कृत्याः । अनुवृत्तिरभयं त्यागः सत्कृतिश्च कृत्यानां वशोपायाः । क्षयं-लोभ-विरागकारणानि प्रकृतीनां न कुर्यात् । सर्वकोपे-

---

१ पतिंवरा विवाह्या कन्या । सा यथा परार्था पत्यर्था तथा वाचः परार्थाः । तथापि निरर्थकं न प्रयोज्याः । तथा सति जनयितारं पितरं भाषणकर्तारं च शपयन्ति । यः उक्तस्य वाक्यस्य विशेषार्थं न जानाति तत्र युक्तमुक्तमपि अनुक्तसदृशं भवति । फलाभावात् । २ पिशाचकी पिशाचसदृशः । अर्थस्य ग्रहणमकुर्वति अनभिज्ञे वा वागुच्चारणमयुक्तमित्यर्थः । ३ विध्यायतः स्वल्पप्रकाशस्य दीपस्य यथा नोपयोगः तथा नयहीनस्य पुंस इति शेषः । बुद्धेः नोपयोगः । ४ स्वस्य अप्रियं कर्तुमिच्छतां विरोधिनां जीवोत्सर्ग एव । तेषां नाश एव कर्तव्य इत्यर्थः । ५ यैर्बहवो दोषाः अपराधाः कृताः तेषां क्षणमात्र दुःखप्रदस्य ताडनाद्युपायस्य अनुष्ठान न शिक्षा, स तु अनुग्रह एव भवति । अतश्चिरकालिक दुःखप्रद एव उपायः कर्तव्य इत्यर्थः । ६ स्वामिनः स्वस्य वा दोषेण येषां वेतनादि उपहत नष्टं ते क्रोध-लोभादिविकारमापन्ना. कृत्यासदृशा भवन्ति । जारण-मारणादिमन्त्रैर्निर्मिता कृत्या यथा क्षुब्धा सती जनयितारमेव नाशयति तथा अपमानादिना क्षुब्धाः भृत्याः स्वामिनं नाशयन्तीत्यर्थः । ७ कृत्यानां अर्थात्तत्स्थानीयानां प्रोक्तानां क्षुब्धानां भृत्यानां—अनुवृत्तिः तच्छन्दानुवर्तनं, स्वतोऽप्यभय तदिष्टवस्तुसमर्पण सत्कारश्च तेषां वशीकरणस्य उपायाः भवन्ति । ८ क्षयः तेषां नाशः, लोभः द्रव्यादीनां, विरागः वैराग्य तस्य कारणानि न कर्तव्यानि ।

---

+ पाठान्तरे 'ऽनुग्रह इव' इति ।

भ्य' प्रकृतिकोपो गरीयान् । अचिकित्स्यदोषदुष्टान् खनिदुर्गे बध्वा काराकर्मान्तरेषु क्लेशयेत् । अपराद्धैरपराधकैश्च सहवासं न कुर्वीत । स हि गृहप्रविष्ट सर्पवत् सर्वव्यसनानामागमद्वारम् । न कस्यापि पुरः क्रुद्धस्य तिष्ठेत् । क्रुद्धो हि सर्प इव यमेवाग्रे पश्यति तत्रैव रोषविषमुत्सृजाति । अप्रतिविधातुरागमनाद्वरमनागमनम् ।

## इति मन्त्रिसमुद्देशः ॥ १० ॥

पुरोहितमुदितोदितकुलशीलं षडङ्गे वेदे दैवेनिमित्ते दण्डनी-

---

१ प्रकृतयोऽमात्यादयः तेषा कोपः गरीयान् । राज्यस्य प्रकृतिमूलत्वात् प्रकृतिकोपे हि राज्यस्य नाशो भवेदेवेति भावः । २ अचिकित्स्यः अपनेतुमशक्यः योऽयं दोषः वैरादिः तेन दूषितान् सान्त्व-दानादिभिरप्रतिसन्धेयान् खनिदुर्गे विवरादौ बध्वा कारागृहोचितैः कर्मैः क्लेशयेत् । तेषां वशीकरणार्थमिति भावः । ३ अपराद्धैः अपराधकर्तृभि'। अपराधकैः अपराधकारयितृभिः सह वासो न कार्यः । यतस्ते हि रन्ध्रान्वेषिणो भवन्ति । ४ स पूर्वोक्तः सहवासः गृहे प्रविष्टः सर्पो यथा नाशकारी भवति तथा सर्वेषां व्यसनानां आगमस्य प्राप्तेः द्वार भवति । ५ स कदाचिन्नाशयेदिति भयात् । ६ तदेवाह । यथा क्रुद्धः सर्पः य अग्रे पश्यति । तमेव दशति । एव मेव क्रुद्धः पुरुषः य पश्यति तमेव प्रहरति अतस्तस्य पुरतो न तिष्ठेत् । ७ पुरोहितसमुद्देश वक्तु प्रथम पुरोहितगुणानाह । पुरोहितेति । उदितोदितकुलशीलं प्रख्यातकुलशीलं । "शिक्षा-कल्पो-व्याकरण-निरुक्त छन्द-ज्योतिष" इत्युक्तषडङ्गे वेदे दैवे निमित्ते महोत्पातादिषु दण्डनीत्यां राजव्यवहारशास्त्रे च प्रवीणम् । अथर्वणि अथर्ववेदोक्ताभिचारिक-शान्तिककर्मकुशलम् । एवलक्षणमुपाध्याय कुर्वीत । आपदोऽग्रे वक्ष्यमाण लक्षणाः तासां प्रतिहर्तारं प्रतीकारक्षमम् ।

त्वां च प्रवीणमथर्वज्ञमतिविनीतं चाभिनीतमापदां देवीनां मानुषीणां च प्रतिहर्तारं कुर्वीत। राज्ञो हि मन्त्रि-पुरोहितौ मातापितरौ, अतस्तौ न केषु चिद्वाञ्छितेषु विसूरयेत् दुःखयेद्दुर्विनयेद्वा। अमानुषोऽग्निरवर्षमतिवर्षं मारको दुर्भिक्षं सस्योपघातः जन्तूत्सर्गो व्याधि-भूत-पिशाच-शाकिनी-सर्प व्याल-मूषक-क्षोभश्चेत्यापदः। शिक्षालापक्रियाक्षमो राजपुत्रः सर्वासु लिपिषु प्रसङ्ख्याने पद-प्रमाण--प्रयोग-कर्मणि नीत्यागमेषु रत्नपरीक्षायां सम्भोग--गृहरणोपवाद्यविद्यासु च साधु विनेतव्यः। अस्वातन्त्र्यमुक्तकारित्वं नियमो विनीततार्थश्च गुरूपासनकारणानि। व्रत-विद्या-वयोधिकेषु-नीचैराचरणं विनयः।पुण्यावाप्तिः शास्त्ररहस्यपरिज्ञानं सत्पुरुषाभिगम्यत्वं च विनयफलम्। अभ्यासः कर्मसु कौशलमुत्पादयति। अवयद्यस्ति तद्भेभ्यः(?)सम्प्रदायः। गुरुवचनमनुल्लङ्घनीयं, अन्यत्राधर्मानुचिताचारात्। प्रत्यवायेभ्यो युक्त-

---

१ हितकारित्वात् मातापितरौ अर्थात्तत्समावित्यर्थ.। २ आपद आह। अमानुषेति। अमानुषः अग्निः विद्युदादिः। मारकः महामारीति प्रसिद्धो रोगविशेषः। शलभादिकृतः सस्यानां धान्यानामुपघातः। इत्यादय आपदः। ३ गुरुमुक्त्वा शिष्यस्य लक्षणान्याह। शिक्षेत्यादि। प्रसङ्ख्याने गणितादौ। नीत्यागमेषु नीतिशास्त्रेषु, सम्भोगं कामशास्त्रे, गृहवाद्य वीणादि रणवाद्य भेर्यादि तयोर्वादनविद्यायां च साधु विनेतव्यः शिक्षणीयः। ४ विद्याधिगमे गुरूपास्तेरावश्यकत्वात् तत्कारणान्याह। अर्थः द्रव्यदानम्। ५ नीचैराचरणं नम्रतया वर्तनम्। ६ विनयस्य लक्षणमुक्त्वा फलमाह। पुण्येति। ७ विद्याभ्यासफलमाह। अभ्यासेति। ८ गुरोः वचन अनुल्लङ्घनीयं तथापि अधर्मे अनुचिताचारे च उल्लङ्घने न कोऽपि दोष इत्याह।

प्रयुक्तं वा गुरुरेव जानाति, यदि न शिष्यः प्रत्यर्थी वादी वा स्यात्। गुरुजनरोषेऽनुत्तरदानमभ्युपपत्तिश्चौषधम् । शत्रूणामभिमुखः पुरुषः श्लाघ्यो न पुनर्गुरूणाम् । आराध्य न प्रकोपयेत्, यद्यसावाश्रितेषु कल्याणमाशंसति । गुरुभिरुक्तं नातिक्रमितव्यं, यदि नैहिकामुष्मिकफलविलोपः । सन्दिहानो गुरूमकोपयन् पृच्छेत् । गुरूणां पुरतो न यथेष्टमासितव्यम् । नानाभिवाद्योपाध्यायाद्विद्यामाददीत, यद्युक्ति-जाति-श्रुताभ्यामाधिक्यं समानत्वं वा । अध्ययनकालेष्वासङ्गं पारिप्लवमन्यमनस्कतां च न भजेत् । सहाध्यायिषु बुद्ध्यतिशयेन नाभ्यसूयेत् । प्रज्ञयातिशयानो न गुरुमवल्हादयेत् । स किमभिजातो, यो मातरि पुरुषः पितरि शूरो वा । गुरुणाऽननुज्ञातो न क्वचिद्व्रजेत् । मार्गमचलं जलाशयं च नैकोऽवगाहेत । पितरमिव गुरुमुपचरेत् । गुरुपत्नीं जननीमिव मन्येत । गुरुवद्गुरुपुत्रं पश्येत् । सब्रह्मचारिणि बान्धव इव स्निह्येत् । ब्रह्मचर्यमाषोडशाद्वर्षात् । ततो गोदानम् । नित्यं चास्य समविधैः सहाधीतं सर्वदाभ्यसेत् । गृहदौःस्थ्य

---

१ गुरूक्तमेव प्रमाणमित्यत्र हेतुमाह । प्रत्यवायेति । प्रत्यर्थी शत्रुः वादी-प्रतिवादी वा न स्यात् चेत् ।२ गुरुजनानां रोषस्य शान्तिमाह । अभ्युपपत्तिः सेवा । ३ गुरुणा सह विवादो न कार्य इत्याह । ४ आराध्य पूज्यं गुर्वादिं न प्रकोपयेत् । ५ ऐहिक इह लोकसम्बन्धि आमुष्मिकं परलोकसम्बन्धि । ६ नम्रतया प्रश्नं कुर्यात् । ७ आसङ्गः अन्यचित्तता । पारिप्लवं चापलम् । ८ सहाध्यायिनो न निन्देत् । ९ अवल्हादयेत् लज्जयेत् । १० मातरि पुरुषः पुरुषत्वप्रयुक्तकर्मकारी । ११ "गुरुवद्गुरुपत्नीषु" इत्यभिधानात् । १२ सब्रह्मचारिः सहाध्यायी । १३ गोदान एतदाख्य संस्कारः । १४ गृहदौःस्थ्यं स्वगृहसम्बन्धिनी विपत् । आगन्तुकानां प्राघूर्णकादीनाम् ।

मागन्तुकानां पुरतो न प्रकाशयेत् । परगृहेषु सर्वो विक्रमादित्यायते । स खलु महान् यः स्वकार्येषु उत्सहते । परकार्येषु को नाम न शीतलः? । राजासन्नः को नाम न साधुः?। अर्थपरेष्वनुनयः केवलं दैन्याय । को नामार्थार्थी प्रणयेन तुष्यति । आश्रितेषु कार्यतो विशेषकारणेऽपि दर्शन-प्रियालापनाभ्यां सर्वत्र समवृत्तिस्तंत्रं वर्द्धयति अनुरञ्जयति च । तनुधनादर्थग्रहणं मृतमारणमिव । अप्रतिविधातरि कार्यनिवेदनमरण्यरुदितमिव ।

---

१विक्रमादित्यो नाम प्रसिद्धो राजा तद्वदाचरति श्रीमतामभिनय करोतीत्यर्थः । तत्र स्वस्य व्ययाभावात् । २ स्वकार्येषु उत्सहते उत्साहपूर्वकं कार्याण्यारभते । ३ शीतलः स्वस्थः । तत्र स्वकीयायव्ययाभावात् । ४ राजपुरुष इति शेषः । राजसन्निधौ सर्वोऽपि साधुरेव । तत्र दण्डादिभयादिति भावः । ५ अर्थपरेषु अर्थसम्पादनतत्परेषु कृपणेषु वा अनुनयः सामपूर्वकं भाषणम् । तेन केवल दैन्यद्योतनमेव भवति नार्थलाभ इति भावः । ६ द्रव्यार्थी प्रणामादिना न तुष्यति । ७ आश्रितेषु अमात्य-पुरोहितादिषु मध्ये कार्यवशात् कस्य चिद्विशेषप्रयोजनेऽपि न तत्र स्नेहाधिक्यं दर्शयेत् । अपि तु इतरेषु सर्वेष्वपि समवृत्तिर्भवेत् । समवृत्तेः फलमाह । समवृत्तिः तन्त्र राजतन्त्र वर्द्धयति अनुरञ्जयति च । एतेन—स्वाश्रितेषु केन चित्किमपि विशिष्टं कार्यं कृत चेत् तं पारितोषिकदानादिना सन्तोषयेत् । पर एकान्तभाषण—प्रेमावलोकन—प्रियालापादिभिः स्वानुरागं न प्रकाशयेत् । तथा सति अन्येषां विद्वेषाय भवतीति भावः । ८ तनुधनादल्पधनात् दरिद्रादित्यर्थः । पूर्वं दारिद्र्येण मृतस्य पुनरपि तस्मादर्थग्रहणेन तस्य मारणमेव भवति । अतः धनिकेभ्य एव करादिना द्रव्य गृहीतव्यं न दरिद्रेभ्य इति भावः । ९ अप्रतिविधातरि प्रतीकारमकुर्वति पुरुषे कार्यस्य निवेदनं अरण्येरुदितवन्निष्फलमित्यर्थः ।

अविचारकस्य युक्तिकथनं तुषकण्डनमिव । नीचेषूपकृतमुदके विशीर्णं लवणमिव । अविशेषज्ञे प्रयासः शुष्कनदीतरणमिव । परोक्षे किलोपकृतं सुप्तसंवाहनमिव । अकाले विज्ञप्तमूषरे कृष्टमिव । उपकृत्योद्घाटनं वैरकरणमिव । अफलवतो नृपतेः प्रसादः काशकुसुमस्येव । गुणदोषावनिश्चित्य अनुग्रह-विग्रहविधानं ग्रहाभिनिवेश इव । उपकारापकारासमर्थस्य तोष-रोषकरणमात्मविडम्बनमिव । ग्राम्यस्त्रीविद्रावणकारि गलगर्जितं

१ कथिताया युक्तेः विचारमकुर्वतः युक्तिकथन तुषाणां धान्यकणाभासानां कण्डनवन्निरर्थकम् । २ नीचेषु कृतस्य उपकारस्य तदुत्तरकाले नामस्मरणमपि न भवति । उदके प्रक्षिप्त लवणं यथा विशीर्यते, तथा स उपकारो विशीर्णो भवतीत्यर्थः। ३ विशेष न ज्ञातवति पुरुषे बोधनप्रयास- शुष्कनद्यास्तरणमिव विफलः। तत्र जलस्य विशिष्टबुध्याश्चाभावात् प्रयासो निरर्थक एव । ४ परोक्षे अप्रत्यक्षे कृतः उपकार. तस्य हिताय भवति, तथापि तेन अविदितत्वात् सुप्तस्य पुरुषस्य पादसंवाहनवत् कदाचिन्निरर्थकोऽपि भवति । ५ ऊषर क्षारमृत्तिकाविशिष्ट प्रदेशः । ६ यस्य नृपतेः प्रसादेन किमपि फल न प्राप्यते, स प्रसादः काशस्य नदीतीरस्थतृणविशेषस्य कुसुममिव विफल इत्यर्थः । कुसुमदर्शनानन्तरं फलदर्शन नियतमेव सर्वेषां वृक्षाणाम् । काशस्य तु केवलं कुसुममेव रमणीय दृश्यते न तत्र फलमिति प्रसिद्धिः । ७ कस्यचिदुपकारं कृत्वा तस्य–उद्घाटन वैरकरणसदृश भवति अतस्तन्न कर्तव्यमिति भाव । ८ पूर्व गुण–दोषयोर्विवेचन–पूर्वक निश्चय कृत्वा अनुग्रहो विग्रहो वा कर्तव्यः । अन्यथा ग्रहाणां राहुकेत्वादीनां भूतादीनां वा अभिनिवेशसदृशो भवति । स्वस्यैव बाधक इत्यर्थ । ९ तोष–रोषौ हि उपकारापकारफलौ तौ यदि न भवत. तर्हि "प्रज्वालितान्यंर्जनानि नाङ्गाराय न भस्मने" इति वत् तेन रोष–तोषावेव न कार्यौ । नोचेदात्मन उपहास एव भवति ।

ग्रामशूराणाम्। स विभवो मानुषाणां यः परोपभोग्यो, न तु व्याधिरिव यः स्वस्यैवोपभोग्यः। स किं गुरुः पिता सुहृद्वा योऽभ्यसूयागर्भं बहुषु वा दोषं प्रकाशयन् शिक्षयति। स किं प्रभुर्यश्चिरसेवकेषु एकमप्यपराधं न सहते।

## इति पुरोहितसमुद्देशः। ११।

अभिजनाचार-प्रज्ञानुराग-शौचशौर्यसम्पन्नः प्रभाववान् बहुबान्धवपरिवारो निखिलोपायप्रयोगनिपुणः समभ्यस्तसमस्तवाहनायुधयुद्धलिपिभाषात्म-परज्ञानीस्थितिः सकलतंत्रसामन्ताभिमतः साङ्ग्रामिकाभिगामिकाकारशरीरो भर्तुरादेशाभ्युदयहितबुद्धिषु निर्विकल्पः स्वामिनात्मवन्मानार्थप्रतिपत्ति–राजचिन्हैः सम्भावितः सर्वक्लेशायाससहः स्वैः परैश्चाप्रधृष्यप्रकृतीरितिसेनापतिगुणाः। अप्रभाववान्स्त्रीजितत्वमौद्धत्यं मूढता व्यसनि-

---

१ग्रामे स्वग्राम एव शूराः। स्वतः भीरवोऽपि शौर्याटोपेन परान्वञ्चयता गलगर्जित ग्राम्यस्त्रीणामेव विद्रावणेक्षम न तु नागरिकाणां,स्त्रीणां।कुतः पुरुषाणाम्। २यः परैःआप्त-मित्र-दीनान्ध-कृपणादिभिः यथा योग्य भुज्यते स एव विभवः ऐश्वर्य। रोगवत्स्वोपभोग्यस्तु न विभव। ३ किं प्रभुः कुत्सितः स्वामी। समयविशेषे सेवकस्यापराधः क्षन्तव्य इत्यर्थः। ४ पुत्र शिष्यादयः शिक्षणीयाः, तथापि सर्वदा तेषां मर्मोद्घाटनपूर्वक शिक्षा न देया। मर्मकृन्तनेन हि द्वेषो भवति। ५ अथ सेनापतिसमुद्देशं विविक्षुः तद्गुणानाह। अभिजनेति। अभिजनवान् आचारेण स्वजाति-कुलादिविहिताचारेण सम्पन्न.। प्रज्ञा बुद्धिः, अनुरागः स्वामिनि सेवकादौ च प्रेम, शौच बाह्याभ्यन्तरं, शौर्य पराक्रमः एतैः सम्पन्नः। प्रभावः तेजोविशेष. तद्वान्। बहुनां बान्धवानां परिवारो यस्य। उपायाः

ना क्षय-व्यय-प्रवासोपहतत्वं तंत्राप्रतीकारः सर्वैःसह विरोधः परपरीवादः* परुषभाषित्वं अनुचितज्ञत्वं असंविभागित्वं स्वातन्त्र्यं आत्मनः सम्भावनोपहतत्वं स्वामिकार्यव्य-सनोपेक्षा सहकार्यकृतकार्यविनाशो राजहितवृत्तिषु चेर्ष्यालुत्वमिति सेनापति-

---

मामादय ,प्रयोगाः अग्नि-जल-स्तम्भनादय. तेषु निपुण । सम्यक् अभ्यस्ता समस्तानां समग्राणां—वाहनाना गजाश्वादीनां आयुधानां खड्गादीनां युद्धानां सङ्कुलादीनां लिपीनां विभिन्नदेश्यानां भाषाणां,आत्मनः मनस परिज्ञान तस्य स्थितिश्च येन सः । तन्त्रस्य कार्यपुरुषसमूहस्य सामन्तानां च अभिमतः । साङ्ग्रामिकान् योधान् अभिगन्तु समर्थः साङ्ग्रामिकः, तदाकार शरीर यस्य । भर्तु स्वामिनः आदेशः आज्ञा अभ्युदयः उत्कर्षः हित च एतद्विषयिणी बुद्धिर्येषां तादृशेषु पुरुषेषु निर्विकल्पः निःशङ्क । स्वामिना राज्ञा—आत्मन सदृश यथा स्यात्तथा मान. अर्थस्य प्रतिपत्तिः प्राप्तिः राज्ञः चामरादीनि चिन्हानि च तैः सत्कृतः । सर्वेषां आधिभौतिकादीनां क्लेशाना सहनकर्ता । स्वैः परैश्चापि अधृष्य नातिमृदुर्नातितीव्रश्च सेनापतिः कर्तव्यः । एतं सेनापतेर्गुणा ।

१ अथ सेनापतिदोषानाह । अप्रभावेति । क्षय. यक्ष्मा रोगविशेषः । व्ययः द्रव्यादीनां,प्रवासश्च एतैस्त्रिभिः उपहतत्व आक्रान्तत्वम् । तन्त्रस्य शत्रुकृतस्येति शेष । तस्य अप्रतिकरणम् । परेषां अन्येषां परीवाद. निन्दा व्यञ्जको जल्पः । संविभागः लब्धस्य द्रव्यस्य बान्धवादिषु विभजन, सोऽस्यास्तीति सविभागी; स न भवतीत्यसंविभागी तस्य भावः । स्वातन्त्र्य स्वच्छन्देनैव कार्यानुष्ठानम् । आत्मनः सम्भावना यथा—

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ।।

---

* अत्रमूले ' परवाद ' इति वर्तते । अग्रे च दूतसमुद्देशेऽप्येवमेव वर्तते । कोशादौ प्रायशः " परीवादापवादवत्" इत्याद्युपलभ्यते ।

दोषाः । सचिरंजीवी राजपुरुषो यो नगरनापित इवानुवृत्तिपरः सर्वासु प्रकृतिषु ।

---

## इति सेनापतिसमुद्देशः । १२ ।

आसन्नेष्वर्थेषु दूतो मन्त्री । स्वामिभक्तिरव्यसनिता दाक्ष्यं शुचित्वममुमूर्षुता प्रागल्भ्यं प्रतिभानवत्वं क्षान्तिः परमर्मवेदित्वं जातिश्च इति प्रथमा दूतगुणाः । स च त्रिविधो-निःसृष्टार्थः परिमितार्थः शासनहरश्चेति । यत्कृतौ स्वामिनः सन्धि-विग्रहौ प्र-

---

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।

इत्यादिप्रकारेण आत्मनः महत्वस्य सम्भावना, तया उपहतत्वं व्यापृतत्वम् । स्वामिनः कार्यस्य व्यसनस्य सङ्कटस्य च उपेक्षा । सहकार्याणां अन्येषां योधादीनां कार्यस्य विनाशकरणम् । राज्ञः हिते वृत्तिर्येषां तेषु च ईर्ष्यालुत्वं इत्येते सेनापतेर्दोषाः । सेनापतिग्रहणमुपलक्षणार्थम् । तेन सचिवादीनामपि ग्रहणम् ।

१ नगरवासी नापितो यथा सर्वेषां प्रत्यहमनुवृत्त्या चिरं सुखमनुभवति सर्वेषां प्रियश्च, तथा राजा सर्वासां प्रकृतीनां यथायोग्यमनुवर्तनेन चिरजीवी भवति । २ अथ दूतमाह । आसन्नेषु अचिरमनुष्ठेयेषु कार्येषु दूतः मन्त्री भवति, कार्यदर्शित्वात् । अतस्तस्य गुणा अवश्य वक्तव्या इत्यर्थः । ३ अथ तस्य गुणानाह । द्यूत-पानादिव्यसनेष्वनासक्तत्वम् । अमुमूर्षुता रोगादिना शक्तिहीनत्वाभावः । प्रतिभानं समयस्फूर्तिः तद्वत्वम् । जातिः द्विजत्वादिः एते प्रथमाः दूतत्वेऽधिकारसम्पादका गुणा भवन्ति । ४ दूतस्य विशेषगुणान्वक्तुं तस्य भेदानाह । स चेति ।

माणं स निःसृष्टार्थः [1] । यथा कृष्णः पाण्डवानाम् [2] । अविज्ञातो दूतः परस्थानं न प्रविशेत् निर्गच्छेद्वा [3] स्वामिनमतिसन्धातुकामः । परो मां विलम्बयितुमिच्छतीत्यवज्ञातोऽपि [4] दूतो नापसरेत् । गूढपुरुषान्नावसर्पयेत् [5] । परेणाशु [6] प्रेषणे दूतः कारणं विमृशेत् । कृत्योपग्रहो [7] कृत्योत्थापनं कृत्यभेदनं सुत-दायादावरुद्धोपजापः स्वमण्डलप्रविष्टगूढपुरुषपरिज्ञानमन्तपालाटविक-सम्बधि-कोशदेश-तन्त्र-मित्रावरोधः कन्या-रत्न-वाहन-तीक्ष्णपुरुष प्रयोगात्परप्रकृतिक्षोभकरणं च दूतकर्म । मन्त्रि-पुरोहित-सेनापतिप्रतिबद्धपूजनोपचार-विस्रम्भाभ्यां शत्रोरितिकर्तव्यतामन्तःसारतां च [8]

---

१ येन दूतेन कृतौ सन्धि-विग्रहौ स्वामिन. प्रमाण सम्मतौ भवतः स निःसृष्टार्थः २ सन्धिर्वा विग्रहो वा कर्तव्य इति स्पष्टमनुक्तेनापि कृष्णेन कृतो विग्रहः पाण्डवैरङ्गीकृत एव । ३ दूतस्येतिकर्तव्यतामाह । परस्य शत्रोः स्थानं न प्रविशेत् निर्गच्छेद्वा ४ अवज्ञातः अपमानितोऽपि स्वकार्यमकृत्वा इति । नापसरेत् न प्रतिनिवर्तेत । ५ गूढपुरुषाश्चाराः तान्नावसर्पयेत् स्वामिसकाशं न प्रापयेत् । ६ शत्रुणा आशु स्वस्य प्रेषणे प्रतिनिवर्तने किं कारण भविष्यतीति विचारयेत् । ७ परेणास्थापितायाः कृत्यायाः उपग्रहः शान्तिः, स्वत. कृत्याया उत्थापन च, परकृत्यानां भेदन नाशन—सुताः दायादाश्च अवरुद्धाः कारादौ निक्षिप्ताः तेषां उपजापः द्रव्यादिदानेन भेदनम्, स्वस्य मण्डले राज्ये प्रविष्टानां गूढपुरुषाणां चाराणां परिज्ञान—अन्तपाला अन्तः पुरपालकाः, आटविका अटवीपालकाः सम्बन्धिनश्च, कोशस्य द्रव्यसङ्ग्रहस्य देशस्य च तन्त्र, मित्रांश्च अवरोधोऽन्तःपुर च नित्य परीक्षेत् इति शेषः । कन्याः रत्नानि वाहनान्यश्वादीनि । तीक्ष्णपुरुषाः गुप्तवधकर्तारः एतेषां प्रयोगेण शत्रोः प्रकृतीनां क्षोभकरणं च इत्येतानि दूतस्य कर्माणि भवन्ति । ८ शत्रोर्मन्त्रि—पुरोहितादीनां पूजनोपचारार्पण विश्वासोत्पादन च ताभ्यां परस्य इति कर्तव्यतां अन्तःसारतां तद्बलं च जानीयात् । दूत इति शेषः ।

विद्यात् । स्वयमशक्तः परेणोक्तमनिष्टं सहेत । गुरुषु स्वामिषु वा परवादे नास्ति क्षान्तिः । स्थित्वापि यास्यतोऽवस्थानं केवलमुपक्षयहेतुः । वीरपुरुषपरिवारितः शूरपुरुषान्तरितान्परदूतान्पश्येत् । श्रूयते हि किल चाणक्यस्तीक्ष्णदूतप्रयोगेणैकं नन्दं जघानेति । शत्रुप्रहितं शासनमुपायनं च स्वैरपरीक्षितं नोपाददीत । श्रूयते हि स्पर्शविषवासिताद्भुतवस्त्रोपायनेन करहाटपतिः कैटभो वसुनामान राजानं, आशीविषविषोपेत—रत्नकरण्डकप्राभृतेन च करवालकरालं जघानेति । महत्यपकारे दूतमपि हन्येत । उद्धृतेष्वपि शस्त्रेषु दूतमुखा वै राजानः । तेषा-

१ परवादे निन्दायां क्षान्तिः नास्ती तत्कालमेव प्रतिकुर्यादित्यर्थः । अत्र अशक्तोऽपि न सहेत् इति ज्ञेयम् । २ पूर्वं स्वस्थाने एव स्थित्वा पश्चात् शत्रु यियास्यन् पुनरप्यवस्थितश्चेदय दुर्बल इति ज्ञात्वा शत्रुरेवाभियाति तस्मात्स्वस्य नाशो भवति। अतः अवस्थान उपक्षयस्य नाशस्यैव कारण भवति । ३ स्वय वीरपुरुषै परिवारितः सन् शूरपुरुषैरावृतानपि परस्य दतान् पश्येत् । ४ चाणक्यः प्रसिद्धः । तीक्ष्णदतस्य प्रयोगेण नन्द नवनन्देष्वेकतम जघान इति श्रूयते। वृद्धमुखादिति शेषः । ५ शत्रुणा प्रहित प्रेषित शासन पत्रादि उपायन च स्वैः पुरुषै वैद्यादिभिः अपरीक्षित न उपाददीत न स्वीकुर्यात् । ६ स्पर्शमात्रेण सद्यारक्षमेण विषेण वासितानां अद्भुतानां वस्त्राणा उपायनेन करहाटो नाम जनपद. तस्य अधिपतिः कैटभो नाम राजा वसुनामान राजान जघान तदुपायनीकृतविषदिग्धवस्त्रपरिधानेन स मृत इत्यर्थः । आशीविषः सर्पः तस्य विषेण उपेतस्य रत्नकरण्डकस्य उपायनेन करवालकरालाभिधं स्वशत्रु जघान इति भावः।७ दतहननिषेधस्यापवाद माह । महति अपराधे सति दूतगपि हन्यात्।८ न केवल युद्धात्पूर्वमेव दूतस्य प्रयोजन, अपितु युद्धस्य प्रारम्भानन्तरमपि इत्याह । उद्धृतेष्विति । शस्त्रेषु उद्धृतेष्वपि राजानः दूतमुखा एव । सामादिकरणे तेषामेवोपयोगात् ।

*'०त्यपराधे' इति पाठान्तरम् । 'दूतमभि०' इति च ।

मन्त्यावसायिनोऽप्यवध्याः, किमङ्ग पुनर्ब्राह्मणाः।अवध्यभावाद्दूतः सर्वमेव जल्पति । कःसुधीर्दूतमुखात् श्वानात्परोत्कर्षं स्वापकर्षं च मन्येत । तदशेषरहस्यपरिज्ञानार्थं परदूतः स्त्रीभिरुभयवेतनैः तद्गुणाचार-शीलानुवृत्तिभिर्वा प्रणिधातव्यः । चत्वारि वेष्टनानि खड्गमुद्रा च प्रतिपक्षलेखानाम् ।

## इति दूतसमुद्देशः । १३ ।

स्व-परमण्डलकार्याकार्यावलोकने चाराः खलु चक्षूंषि क्षितिपतीनाम् । अलौल्यममृषाभाषित्वमभ्यूहकत्वं चेति चारगुणाः ।

---

१ दूतानामवध्यत्वमाह । तथामात । अन्तेवसायिनः चाण्डालाः तेऽपि यदि दूतत्वेनागताश्चेदवध्याः । तर्हि वक्तव्य ब्राह्मणजातीयकास्य दूतोऽवध्य इति । २ अप्रिय सत्यमसत्य वा सर्वमपि जल्पति । तत्क्षन्तव्यमिति शेषः । ३ किंच दूतमुखरूपात् श्वानात् तस्य जल्पनादित्यर्थः । परस्य उत्कर्ष स्वस्य अपकर्षं च न जानीयात् । दूतेनोक्त शत्रोर्महत्व सर्वदा सत्यमेवेति न मन्तव्यमित्यर्थः । ४ तर्हि तस्य अशेषरहस्यपरिज्ञानार्थ स्त्रीभिः, उभयवेतनैः तस्माद्दूतात् येषा वेतन लभ्यते तानेव स्वयमपि वेतन दत्वा तदनुवृत्तिभिरन्यैः पुरुषैः तस्य रहस्य ज्ञात्वा स्वपरबलाबलनिश्चयः । न केवल दूतवल्गनेनैवेति भावः । ४ प्रतिपक्षस्य शत्रोः लेखानां ( भाषायां 'खरिता' इति प्रसिद्धानां ) चत्वारि वेष्टनानि दत्वा खड्गस्य मुद्रा कर्तव्या इत्यर्थः ।

५ एव दूतं ( भाषायां 'वकील' इति प्रसिद्ध ) तद्गुणान् तस्य कर्माणि चोक्त्वा अथ चारान् (भाषायां 'हेर' इति प्रसिद्धान् ) तेषा उपयोगं च आह । स्वस्य परस्य च मण्डलयोः किं कार्यं किमकार्य इत्येतस्यावलोकने राज्ञा चारा एव नेत्रा भवन्ति । "चारचक्षुषो वै राजानः" इत्याद्युक्तत्वात् । ६ तेषां गुणानाह । अलौल्यमिति । लौल्यं चापल्य तद्रहितत्व, अमृषाभाषित्व, अभ्यूहकत्वं तर्केण परमर्मज्ञानसमर्थत्वं एते चकारादन्येऽपि युक्तायुक्तवेदित्वादयश्चारस्य गुणा भवन्ति ।

तुष्टिदानमेव चाराणां वेतनम् । ते हि तल्लोभात्स्वामिकार्येष्वतीव त्वरन्ते । असति सङ्केते त्रयाणामेकवाक्ये युगपत्संम्प्रत्ययः । अनवसर्प्यो हि राजा स्वैःपरैश्चातिसंन्धीयते । किमस्त्ययामिकस्य निशि कुशलम् । कार्पटिकोदास्थितिक-गृहपतिक वैदेहिक-तापस-कितव-किराताक्षिशालिक-यमपट्टिकाहितुण्डिक--शौण्डिक--शौभिक-पाटच्चर-विट-विदूषक-पीठमर्दक नर्तक-गायक-वादकवाग्जीव-गणक-शाकुनिक-भिषक्-ऐन्द्रजालिक-नैमित्तिक-सूद-आरालिक-संवाहक-तीक्ष्ण-रसद---क्रूर-जड-मूक-बधिरान्धछद्मानः स्थायि-यायिभेदेनावसर्प्य वर्गः । परमर्मज्ञः प्रगल्भच्छात्रः कार्पटिकः । यं कमपि समयमास्थाय प्रतिपन्नाचार्याभिषेकः प्रभूतान्तेवासी प्रज्ञातिशययुक्तो राज्ञा परिकल्पितवृत्तिरुदास्थि-

१ चाराणां न नियत वेतनं अपितु तुष्टिदानं पारितोषिकप्रदानमेव तेषां वेतन भवति । २ नियतवेतननिषेधस्य हेतुमाह । त इति । वेतनप्राप्तौ तेऽलसा भवेयुः । पारितोषिकलोभेन कार्येष्वतीव त्वरन्ते त्वरया कार्याण्यनुतिष्ठन्ति । ३ सङ्केतपूर्वकमेव चारप्रेषणं कर्तव्यम् । सङ्केतानुसारि तैरुक्तं चेत्तत्सत्यमिति प्रतीयात् । नान्यथा । कदाचित्पारितोषिकलोभेन ते ऽसत्यमपि ब्रूयुः । सङ्केतं विनैव तेषां प्रेषणे—एकेन यदुक्तं तदनुकूलमेवान्याभ्यां द्वाभ्यामुक्तं चेत् त्रयाणामेकवाक्यतां ज्ञात्वा तत् प्रतिपत्तव्यम् । नैकस्य कथनेन । ४ अनवसर्प्यः असम्भाष्यः । ५ अयामिकः निशि सञ्चारमकुर्वन् । तस्य कुशलं नास्ति । अज्ञातवृत्तत्वात् । ६ वक्ष्यमाणलक्षणैः कार्पटिकादिभिः परवृत्तान्त ज्ञायेत । ८ छात्रः शिष्यवेषो वा कार्पटिकसंज्ञः । ९ प्रतिपन्नः प्राप्तः आचार्यत्वस्य अभिषेकः पूर्णाभिषेकः यस्मै । प्रभूताः बहवः अन्तेवासिनः शिष्याः यस्य । स उदास्थितसंज्ञको भवति ।

तः । गृहपतिक-वैदेहिकौ, ग्रामकूट-श्रेष्ठिनौ वा । जिह्मव्रत-विद्याभ्यां लोकदम्भनहेतुस्तापसः । कितवो द्यूतकारः । अल्पाखिलशरीरावयवः किरातः । अक्षिशालिक—यमपट्टिको गृहात्प्रतिगृहं चित्रपटदर्शी । आहितुण्डिकः सर्पक्रीडाप्रसरः । शौण्डिकः कल्पपालः । शौभिकः क्षपायां काण्डपटावरणेन नानाविधनाम-रूपदर्शी । पाटच्चरः चौरो बन्दीकारो वा । व्यसनिनां प्रेषणाजीवो विटः । सर्वेषां प्रहसनपात्रं विदूषकः । कामशास्त्राचार्यः पीठमर्दकः । गीताङ्गपटप्रावरणेन नृत्यवृत्याजीवी नर्तकः, नाटिकाभिनयरङ्गनर्तको वा । रूपाजीवावृत्त्युपदेष्टा गायनः । गीतप्रबन्ध-गतिविशेषवादकश्चतुर्विधातोद्यप्रचारकुशलो वादकः । वाग्जीवी वैतालिकः सूतो वा ।

---

१ गृहपतिकः ग्रामकूटः । २ वैदेहकः श्रेष्ठी । ३ जिह्मव्रत–विद्याभ्यां कपटव्रतेन कपटविद्यया च लोकानां दम्भनं वञ्चनं तस्य हेतुर्यस्य स तापसो भवति । ४ अल्पाः अखिलाः शरीरस्य अवयवाः यस्य ह्रस्वकाय इत्यर्थः । ५ अहिं सर्पं तुण्डयति क्रीडयतीति अहितुण्डिकः । ६ कल्पः मद्यगृहं तस्य पालकः । ७ स्वरूपाच्छादकः पटविशेषः तस्य वेष्टनेन । क्षपायां रात्रौ । ८ प्रेषणं प्रियां प्रति दूतत्वेन प्रेषण तेन आजीवः जीविका यस्य । ९ प्रहसनं नर्म-तस्य स्थानम् । १० कामशास्त्रस्य वात्स्यायनादिप्रणीतस्य आचार्यः उपदेशकः । ११ गीताङ्गपटः स्त्रीवेषदर्शनप्रयोजकः पटः । नाटिका "स्त्रीप्राया चतुराङ्किका" इत्याद्युक्तलक्षणा तस्याः प्रयोगे पात्राभिनयेन रङ्गे नर्तनकारी वा । १२ रूपाजीवाः वेश्याः तासां वृत्तिः पुरुषवशीकारणादिना तेभ्यो द्रव्य-निष्कासनं, तस्या उपदेशकः । १३ गीतसम्बन्धिनो ये प्रबन्धाः तेषां गति-विशेषान्वादयति यः । चतुर्विधस्य—

गणकः सङ्ख्याविद्दैवज्ञो वा । शाकुनिकः शकुनवक्ता । भिषगायुर्वेदविद्वैद्यः शस्त्रकर्मविच्च । ऐन्द्रजालिकस्तन्त्रयुक्तया मनोविस्मयकरो मायावी वा । नैमित्तिको लक्ष्यवेधी दैवज्ञो वा । महानससारिकः सूदः । विचित्रभक्ष्यप्रणेता आरालिकः । अङ्गमर्दनकलाकुशलो भारवाहको वा संवाहकः । द्रव्यहेतोः कृच्छ्रेण कर्मणा यः स्वजीवितविक्रयी स तीक्ष्णोऽसहनो वा । रसदाः श्वराः । सदा बन्धुषु निःस्नेहः क्रूरः । शेषाः प्रसिद्धत्वान्नोक्ताः ।

## इति चारसमुद्देशः । १४ ।

नाविचार्य किमपि कार्यं कुर्यात् । प्रत्यक्षानुमानागमैर्यथा-

---

ततं चैवावनद्धं च घनं सुषिरमेव च ।
चतुर्विधं तु विज्ञेयमातोद्य लक्षणान्वितम् ॥

इति भरतोक्तस्य मृदङ्गादिचतुर्विधस्य आतोद्यस्य वाद्यस्य प्रचारे प्रवर्तने कुशलः वादक इत्युच्यते । तत्र "वैतालिका बोधकरा" इति नामलिङ्गानुशासनात् नृपादीन्प्रातः स्तुतिपाठेन बोधयन्ति ते वैतालिकाः । "सूतः सारथि-बन्दिनोः" इति विश्वात् सूतः बन्दी इति शेषः ।

१ वाग्जीवी वाचा यशोवर्णनादिरूपया जीवति । २ एक-द्वि-त्र्यादिसङ्ख्यां जानाति अथवा ज्योतिः शास्त्रज्ञः गणक इत्युच्यते । ३ "काय-बाल-ग्रहोर्ध्वाङ्ग-शल्य-दंष्ट्रा-जरा-वृषान्" इत्याद्युक्ताष्टाङ्गस्य आयुर्वेदवित् भिषगित्युच्यते । ४ तन्त्रशास्त्रोक्तया युक्तया मनसो विस्मयकरः । निमित्त आनातीति नैमित्तिकः ।

---

५ एवं चारसमुद्देशमुक्त्वा अधुना विचारसमुद्देशमाह । अविचार्य विचारमकृत्वा कार्यं न कुर्यात् ।

वस्थितवस्तुव्यवस्थापनहेतुर्विचारः । स्वयं दृष्टं प्रत्यक्षम् । न ज्ञानमात्रात्प्रज्ञावतां प्रवृत्तिर्निवृत्तिर्वा । स्वयं दृष्टेऽपि मतिर्मुह्यति संशेते विपर्यस्यति वा, किं पुनर्न परोपदिष्टे । स खलु विचारज्ञो यः प्रत्यक्षेणोपलब्धमपि कार्यं साधु परीक्ष्यानुतिष्ठति । अतिरभसात्कृतानि कार्याणि किं नामानर्थकं न जनयन्ति । अविचार्याचरिते कर्मणि पश्चात्प्रतिविधानं गतोदके सेतुबन्धमिव । कर्मसु कृतेनाकृतावेक्षणमनुमानम् । सम्भावितैकदेशो नियुक्तं विद्यात् । आकारः शौर्यं प्रज्ञा सम्पत्तिरायातिर्विनयश्च रा-

---

१ कोऽसौ विचार इत्यपेक्षायां तत्स्वरूपमाह । प्रत्यक्षेण अनुमानेन आगमेन चैतेन प्रमाणत्रयेण यथास्थितस्य वस्तुनः व्यवस्थापनस्य हेतुः विचार इत्यभिधीयते । वस्तोर्यथार्थज्ञानसाधनं विचार इति भावः । एवं प्रमाणत्रयसिद्धस्यास्य विचारत्वमभिधाय अधुना त्रयाणां प्रमाणानां पृथक् स्वरूपाण्याह । स्वयमिति । स्वयं विविच्य दृष्टं—न प्रमादादिना दृष्टं प्रत्यक्षसंज्ञं भवति । २ प्रज्ञावतां बुद्धिमतां प्रत्यक्षदर्शनं विना केवलं ज्ञानमात्रान्न प्रवृत्तिः । ३ प्रत्यक्षमपि सर्वथा अबाधितं न भवति । मोह—संशय—विपर्यासादिभिः तत्रापि कदाचिदन्तरं स्यात् । तत्र परोपदिष्टे मोहादयः कथं नस्युः । अतः न परोपदेशेनैव कार्यं समारभेत् बुद्धिमान् । ४ प्रत्यक्षेण उपलब्धमपि साधु सम्यक् परीक्ष्य प्रमाद-संशय-विपर्यासादिरहितं बुध्वा योऽनुतिष्ठति स विचारज्ञो भवति । ५ अति रभसात् अतित्वरया । किं नाम अनर्थकं न जनयन्ति अपि तु सर्वमपि जनयन्तीत्यर्थः । ६ विचारमकृत्वा आचरितस्य कर्मणः पश्चात् अनन्तरं प्रतिविधानं प्रतीकारः, गतस्य इतस्ततः प्रसृतस्य उदकस्य सेतुबन्धनमिव निरर्थकमिति शेषः । ७ प्रत्यक्षमुक्त्वानुमानमाह । कर्मसु कार्येषु । कृतेन कर्मणा अकृतस्य अवेक्षणं बुद्ध्या आकलनं अनुमानं स्यात् । अनुष्ठितेन कार्यस्यैकदेशेन अग्रिमस्यापि सर्वस्य स्वरूपनिश्चय इत्यर्थः ।

मपुत्राणां भाविनो राज्यस्य लिङ्गानि । प्रकृतेर्विकृतिदर्शनं हि प्राणिनां भविष्यतोः शुभाशुभयोर्लिङ्गम् । एकस्मिन्कर्मणि दृष्टबुद्धिपुरुषकारः कथं नाम कर्मान्तरे न समर्थः । आप्तपुरुषोपदेश आगमः । यथानुभूतानुमितश्रुतार्थो वाऽविसंवादिवचनः पुमानाप्तः । सा वागुक्ताप्यनुक्तसमा, यत्र नास्ति सद्युक्तिः । वक्तुर्गुणगौरवाद्वचनगौरवं, न स्वतः । किं मितम्पचेषु धनेन

१ सम्भावितो योऽयमेकदेशः स अपरं देश जानीयात् इत्यर्थः । आयतिः प्रभावः । "आयतिः सयमे दैर्घ्ये प्रभावागामिकालयोः" इति विश्वः । आकारादीनि भाविनः राज्यस्य लिंगानि अनुमापकानि भवन्ति इति भावः । २ प्रकृतेः स्वभावस्य विकृतिः विकारः । भविष्यतोः भाविनोः शुभाशुभयोः लिङ्ग, तत्तस्य भाविनः जयस्य पराजयस्य च चिन्हं भवति । एवमेव सर्वत्र । ३ दृष्टः बुद्धेः पुरुषकारः प्रयत्नः यस्य । य एकस्मिन् कर्मणि कुशलः स कर्मान्तरेऽपि कुशली भवेदेव । नैवं सति नौकुशलः तक्षकर्मण्यपि कुशली भवेदिति वक्तव्यम् । बुद्धिमान् यस्मिन्कस्मिन्नपि कर्मण्यकुशलोऽपि बुद्धिप्रभावेण कथमपि कार्यं साधयेदेवेति भावः । ४ आगममाह । वक्ष्यमाणलक्षणस्य आप्तपुरुषस्य उपदेशः आगमसंज्ञकः । ५ आप्तलक्षणमाह । अनुभूतस्य अनुमितस्य श्रुतस्य वा अर्थस्य अविसवादि अविरुद्ध वचन यस्य तादृशः पुरुषः आप्तसज्ञको भवति । नेद लक्षण वैदिकैरादृियते । "आप्तस्तु यथार्थवक्ता" इत्येव ते स्वीकुर्वन्ति । वेदस्य आप्तवाक्यत्वोक्तेः, तस्य अपौरुषेयत्वात् भ्रम-प्रमादादिराहित्याच्च । ६ अधुना युक्तिमाह । सेति । अनुपयुक्तत्वादनुक्तसमा । "युक्तियुक्त वचो ग्राह्य" इति वचनात् । ७ वक्तरि योऽस्य गुणविशेषः तस्य गौरवात् वचनस्य गौरव महत्व भवति, न स्वतः । श्रेष्ठतमानां वचनं सर्वैरादृियते इत्यर्थः । ८ मित परिमितं पचन्ति ते मितपचाः कृपणा इत्यर्थः । चाण्डालानां सरोवरे स्थितं जल यथा अन्येषां उपभोगक्षम न भवति तथा अन्येषामनुपभोग्यं कृपणस्य वित्त अनुपयुक्तमित्यर्थः । सन्तानस्य वंशस्य न उपभोगः ।

चाण्डालसरसि वा जलेन, यत्र न सन्तानोपभोगः । लोकस्तु गतानुगतिकः, यतो ऽसौ सदुपदेशिनीमपि कुट्टिनीं सदुपदेशेषु च न तथा प्रमाणयति यथा गोघ्नमपि ब्राह्मणम् ।

## इति विचारसमुद्देशः । १५ ।

व्ययति मत्यावर्तयाति एनं पुरुष श्रेयस इति व्यसनम् । व्यसन द्विविधं सहजमहार्यं च । सहजं व्यसनं धर्मस-मुद्भूताभ्युदयहेतुभिरधर्मजनितमहाप्रत्यवायप्रतिपादनैरुपाख्यानै—

---

१ अग्रे गतं अनुगच्छति इति गतानुगतिकः । सदुपदेशिनीं कुट्टिनीमि-त्यस्य मूल यथा—

" गतानुगतिको लोकः कुट्टिनीमुपदेशिनीम् ।
प्रमाणयति नो धर्मे यथा गोघ्नमपि द्विजम् " ॥

इति । इदमेव गतानुगतिकत्व भङ्ग्यन्तरेणान्यरुक्तम् । यथा ।

" गतानुगतिको लोको न लोकः पारमार्थिकः ।
वालुकालिङ्गमात्रेण गत मे ताम्रभाजनम् " ॥

इति । यथा कश्चन दुर्गतो विप्रः समुद्रतीरे स्नानार्थं गतः स्वहस्तगतं ताम्र-भाजनं—तीरे निहितं चेत् कोपि चोरयिष्यतीति भिया वालुकायां खनित्वा सं-स्थाप्य तदुपरि लिङ्गाकार विधाय स्नातुं गतः । एतदवसरे स्नानार्थमाग-तैरसङ्ख्यैर्जनैः विप्रेण कृतं वालुकालिङ्गमवलोक्य—अस्यां पर्वण्यां इदमेव श्रेयस्करमिति मन्यमानैरसङ्ख्यानि वालुकालिङ्गानि कृतानि । तेन च त-द्विप्रकृतं लिङ्गं तेन न बुद्धमतस्तस्य ताम्रभाजनं नष्टमिति अस्य मूलभूता आख्यायिका । प्रमाणयति प्रमाणत्वेन स्वीकरोति ।

---

२ व्यसनसमुद्देशं विवक्षुस्तावदादौ व्यसनशब्दस्य निरुक्तिमाह । व्य-स्यतीति । श्रेयसः कल्याणात् व्यस्यति आवर्तयतीति वा व्यसन सङ्कट-मित्यर्थः । ३ सहजातं जन्मना सह जातमित्यर्थः ।

योगपुरुषश्च प्रशमयेत् । परिचितानुकुलेन तदभिलिखितेषु व्यसने उपायेन विरक्तिजननहेतवो योगपुरुषाः । शिष्टसंसर्ग-दुर्जनासंसर्गाभ्यां पुरातनमहापुरुषचरितोत्थाभिः कथाभिर-हार्यं व्यसनं प्रतिबध्नीयात् । स्त्रियमतिभजमानो भवत्यवश्यं तृतीयाप्रकृतिः । सौम्यधातुक्षयः सर्वधातुक्षयं करोति । पानशौण्डश्चित्तभ्रमान्मातरमप्यभिगच्छति । मृगयासक्तिस्त्विभ-व्याल-द्विषद्दायादानामामिषं करोति । नास्त्यकृतं द्यूतासक्तस्य। मातर्यपि हि मृताया दीव्यत्येव कितवः । पिशुनः सर्वेषामपि विश्वासं जनयति । दिवास्वापः सुप्तव्याधिव्यालानामुत्थाँ-

---

१ व्यसनस्य भेदमुक्त्वा तत्परिहारोपायानाह । सहजामिति । धर्माचरणात् समुद्भूताः ये अभ्युदयस्य कल्याणस्य हेतवः तैः, अधर्मजनिता ये महाप्रत्यवायाः दोषाः तेषां प्रतिपादकानि उपाख्यानानि नृगाख्यानादीनि । योगः युक्तिः । "योगः सन्नहनोपाय-ध्यान-सङ्गति-युक्तिषु" इत्यमरः । योगपुरुषा युक्तिमन्तः पुरुषाः तैश्च प्रशमयेत् शान्तिं कुर्यात् । २ योगपुरुषानाह । परिचितेति । परिचितोऽनुकूलश्च । उपायेन वैराग्योत्पादने ये हेतवो भवन्ति ते योगपुरुषा इति भावः । ३ एवं सहजव्यसनपरिहारमुक्त्वा अहार्यव्यसन-परिहारमाह । शिष्टानां सद्वृत्तीनां संसर्गः, दुर्जनानां अशिष्टानां असंसर्गश्च ताभ्यां । पुरातना ये महापुरुषाः नल-राम-युधिष्ठिरादयः तेषां पुण्यतमाभिः कथाभिश्च अहार्यं अजीर्यं व्यसनं प्रतिबध्नीयात् शनैः शनैरावृणुयात् इत्यर्थः । ४ तृतीयाप्रकृतिः षण्ढः । ५ सर्वेषां धातूनां क्षयं नाशं द्रव्यादिधातूनामिति ध्वनिः । ६ पाने सुरापाने शौण्डः कुशलः । ७ इभो गजः व्यालः सर्पः द्विषन् शत्रुः दायादः दायभाक् एतेषां आमिषं भक्ष्यभूतं । ८ अकृतं अकार्यमित्यर्थः । ९ कितवः द्यूतकृत् । १० पिशुनः दुर्जनः । स्वकपटेनेति शेषः । १० सुप्ता ये व्याधिरूपा व्यालाः तेषां जागृतौ दण्डसदृशः । व्याध्युद्भवकारीत्यर्थः ।

पनदण्डः । सकलकार्यान्त एव यक्ष । न परपरिवादात्परं सर्व-
विद्वेषणभेषजमस्ति । तौर्यत्रिकासक्तिः कं नाम प्राणार्थमानैर्न
वियोजयति । वृथाढ्या नाविधाय कमप्यनर्थं विरमन्त्यतीवे-
र्ष्यालवः । स्त्रियं त्यजति घ्नन्ति वा पुरुषं परपरिग्रहाभिगमः ।
कन्यादूषणं वा साहसं सुप्रसिद्धमेव दशमुखदाण्डिक्यहेतुः ।
यत्र नाहमित्यध्यवसायस्तत्साहसम् । अर्थदूषणः कुबेरोऽपि भव-
ति भिक्षाभाजनम् । अतिव्ययोऽपात्रव्ययश्च भवत्यर्थदूषणम् ।
हर्षामर्षाभ्यां तृणाङ्कुरमपि नोपहन्यते, किं पुनर्मनुष्यः । श्रूयते
हि निःकारणं भूतावमानिनौ किल वातापिरिल्वलश्चासुरावग-
स्त्यस्यासादनाद्विनेशतुरिति । यथादोषं कोटिरपि गृहीता न
दुःखायते । अन्यायेन तृणशलाकापि गृहीता प्रजाः खेदयति ।
तरुच्छेदे न फलोपभोगः सकृदेव । प्रजा विभवो हि स्वामिनो

---

१ परस्य परीवादः अपवादः ।२ तौर्यत्रिक नृत्य—गीतादि तस्मिन्नतिशये-नासक्तिः। प्राणाश्च अर्थाश्च मानश्च तैः क न वियोजयति? । अपितु सर्वमपि वियोजयत्येव ।३ अतीव ईर्ष्यालवः अनर्थकरण विना न विरमन्ति ।४ परस्य परिग्रहो भार्या तस्यामभिगमन साहसमपराध. "शत कन्यादूषणे" इत्यादि धर्मशास्त्रे प्रसिद्धमित्यर्थः । ५ दशमुखस्य रावणस्य दाण्डिक्ये शिक्षाया हेतुः । ६ साहसलक्षणमाह । यत्रेति । ७ वक्ष्यमाणलक्षणो ऽर्थदूषणः भिक्षाभाजन दरिद्र इत्यर्थ. । ८ अर्थदूषणमाह । अतिव्यय इति । ९ नोपहन्यते न नाश्यते, तत्र मनुष्यो न नाश्यत इति किमु वक्तव्यमित्यर्थः । १० उक्तमर्थ—मैतिह्येन साधयति । श्रूयत इति । पुराणादिष्विती शेषः । अत्रेत्थ वदन्ति पौराणिकाः। यत्किल लोकोपद्रवकारी वातापिरगस्त्येन भक्षित इति ।११ कोटिरपि गृहीता दण्डरूपेण । राज्ञेति शेषः । दुःखायते दुःख करोति । १२ अन्यायेन तृणशलाकामात्रस्यापि दण्डस्य ग्रहणे प्रजाः खिद्यन्त इति भाव. ।

ऽद्वितीयं भाण्डागारम् । अतो युक्तितस्तमपि भुञ्जीत । राजपरिगृहीतं तृणमपि काञ्चनीभवति । येन हृदयसन्तापो जायते तद्वचनं हि वाक्पारुष्यम् । स्त्रियमपत्यं भृत्यं वा तथोक्त्या विनयेत्, यथा हृदयप्रविष्टात् शल्यादिव न ते दुर्मनायन्ते । वधः क्लेशोऽर्थहरण वा व्युत्क्रमेण दण्डपारुष्यम् । एकेनापि व्यसनेनोपहतश्चतुरङ्गोऽपि राजा विनश्यति, किं पुनरष्टादशभिः ।

## इति व्यसनसमुद्देशः । १६ ।

—:-:—

धार्मिकः कुलाचाराभिजनविशुद्धः प्रतापवान्नयानुगतवृत्तिश्च स्वामी । कोप-प्रसादयोः स्वतन्त्रश्चात्मातिशयेजनं वा यःशास्ति स स्वामी । स्वामिमूलाः सर्वाः प्रकृतयो भवन्त्यभिप्रेतार्थप्रयोजनार्थं, नास्वामिकाः । अमूलेषु तरुषु किं कुर्यान्महापुरुष-

---

१ प्रजानां विभव राज्ञ एवेतिभावः। अतोऽन्यायेन ताभ्यो धननिष्कासनमयुक्तमिति भावः । २ वाक्पारुष्यमाह । येनेति । ३ मृदूक्त्या विनयेदित्यर्थः । तेषां मर्मभेदो न कार्यः । ४ दण्डपारुष्यमाह । वध इति । व्युत्क्रमेण-अर्थहरणं क्लेशो वधश्चेति दण्डक्रममतिक्रम्य । ५ एतानि अष्टादश व्यसनानि । एतेष्वन्यतमेन एकेनापि व्यसनेन उपद्रुतश्चेत् हस्त्यश्वादिचतुरङ्गबलयुतोऽपि राजा विनश्यति, किमुताष्टादशभिः ।

अथ स्वामिसमुद्देशं वक्तु प्रथम स्वामिलक्षणमाह । धार्मिक इत्यादिना । नय नीतिमनुगता वृत्तिः वर्तन यस्य । ७ लक्षणान्तरमाह । कोपे प्रसादे च स्वतन्त्रः स्वच्छया समर्थः । आत्मनः स्वस्य इतरेभ्यो ऽतिशयजननं यस्यास्ति अन्येभ्योऽतिशयवानित्यर्थः । ८ स्वामिमूलाः स्वामिनमाश्रिताः प्रकृतयः अमात्याः प्रजा वा । अभिप्रेतस्य अर्थस्य प्रकर्षेण योजनाय । समर्था इति शेष. । भवन्ति । न अस्वामिकाः ।

प्रयत्नः । असत्यवादिनो विनश्यन्ति सर्वे ऽपि गुणाः । वञ्चकेषु न धनं न परिजनो न चिरमायुः । स प्रियो लोकानां, यो ददात्यर्थम् । स दाता महान्, यस्य नास्ति प्रत्याशोपहतं चेतः । इयमुच्चधियामलौकिकी महती कापि कठोरचित्तता (च), यदुपकृत्य भवन्ति निःस्पृहाः परतः प्रत्युपकारभीरवश्च । प्रत्युपकर्तुरुपकारः सवृद्धिको ऽर्थन्यास इव । तज्जन्मान्तरेषु न केषामृणं येषामप्रत्युपकारि परार्थानुभवनम् । किं तया गवा या न क्षरति क्षीरम् । किं तेन स्वामिप्रसादेन, यो न पूरयत्याशाम् । क्षुद्रपरिष्वक्तः सर्पवानाश्रय इव न कस्यापि सेव्यः । अकृतज्ञस्य व्यसनेषु न सन्ति सहायाः । अविशेषज्ञः शिष्टैर्नाश्रीयते । आ-

---

१ महापुरुषा बुद्धिमन्त' तेषामपि प्रयत्नः आलवाल-दोहद—जलसेकादिः । अमलेषु तरुषु किं कुर्यात्? न किमपि । तथा अस्वामिकाः प्रकृतयो न किमपि कर्तुं शक्नुवन्ति । २ यतो ऽसत्यवादिनि सर्वेऽपि गुणा विनश्यन्ति अतो ऽसत्यं न वक्तव्यमित्यर्थ. । ३ वञ्चको हि सर्वेषा द्वेषपात्र भवति अतः तस्य धन परिजनः सेवकाश्च न भवन्ति । लोकविद्विष्टत्वात् आयुरपि चिर न भवति । ४ अर्थ ईप्सित धन वा । ५ प्रत्याशा प्रत्युपकारस्य लाभस्य वा आशा-तया उपहत ताडित व्याप्त वा । प्रत्याशया दानकर्ता तु वणिक्इव विनिमयकृत् भवति । ६ उच्चधियां उदारबुद्धीनाम् । अलौकिकी सर्वलोकासामान्या । निःस्पृहाः लाभाद्याशाबन्धनरहिताः । ७ न्यासस्य निक्षेपस्य वृद्धिर्नास्ति । तथापि अय प्रत्युपकारः सवृद्धिको ऽर्थन्यास इव भवति । ८ परस्य अर्थमनुभवन् प्रत्युपकारेण तस्य अपाकरणं न करोति चेत् जन्मान्तरे तस्य ऋणी-भवतीत्यर्थः । ९ क्षरति दुहति । १० आशापूरण ही स्वामिप्रसादस्य मुख्यं फलम् । ११ क्षुद्रेण नीचेन परिष्वक्तः सङ्गतः । प्रभुरिति शेषः । आश्रयः गृहम् । अकृतज्ञः उपकारानभिज्ञः । १३ विशेषगुणानभिज्ञः ।

त्मम्भरिः कलत्रेणापि त्यज्यते । अनुत्साहः सर्वव्यसनानामागमनद्वारम् । शौर्यममर्षः शीघ्रकारिता तत्तत्कर्मप्रवीणत्वमित्युत्साहगुणाः । अन्यायप्रवृत्तेर्न चिरं सम्पदो भवन्ति । यत्किञ्चनकारी परैः स्वैर्वा हन्यते । आज्ञाफलमैश्वर्यम् । राजाज्ञा हि सर्वेषामलङ्घ्या । आज्ञाभङ्गकारिणं पुत्रमपि न सहेत । कस्तस्य चित्रगतस्य राज्ञो विशेषो, यस्याज्ञा नास्ति । राजाज्ञावरुद्धस्य पुनस्तदाज्ञाप्रतिपादनेन उत्तमसाहसो दण्डः । सम्बन्धाभावे तद्दातुश्च । परमर्मस्पर्शकरमश्रद्धेयमसत्यमतिमात्रं च न भाषेत । वेषं समाचारं वाऽनभिजानन्न त भजेत् । प्रभवो विकारिणो नाम न विकुरुते । अधर्मपरे राज्ञि कोनाम नाऽधर्मपरः । राज्ञावज्ञा-

---

१ आत्मम्भरिः केवल स्वोदरपूरकः । २ उत्साहरहितत्वादलसो भवति । तस्माच्च सर्वेषां व्यसनानां प्राप्तिः । उत्साहस्य गुणानाह । शौर्येति । ३ अन्याये प्रवृत्तिर्यस्य स अन्यायप्रवृत्तिः । तस्य सम्पदः क्षणभङ्गुराः । ४ यत्किञ्चन न्याय्यमन्याय्यं हितमहितं वा करोतीति यत्किञ्चनकारी । ५ "आज्ञाभङ्गो नरेन्द्राणामशस्त्रो वध उच्यते" इति स्मरणात् । ६ यस्य आज्ञा नास्ति तस्य राज्ञः चित्रस्थस्य च राज्ञः न कोऽपि विशेषः । स मृतप्राय इत्यर्थः । ७ साहसं दण्डः, उत्तमसाहसं १००० पणात्मकः. ११०८ पणात्मको वा दण्डः । अपराधवशात् राजाज्ञया अवरुद्धः कारादौ निक्षिप्तोऽपि पुनः आज्ञोल्लङ्घनं करोति चेत्स उत्तमं साहसं दण्ड्यः । ८ दण्ड्यस्य अपराधसम्बन्धाभावे दण्डकर्तुः प्राड्विवाकादेः स एवोत्तमसाहसदण्डः कार्यः । ९ अतिमात्रं बहु, न भाषेत । १० वेषान्तराच्छन्नाः शत्रवोऽपि वञ्चयन्तीति कृत्वा अज्ञातं न भजेत् । ११ सर्वोऽप्यधर्मपर एव भवति । तदुक्तम् ।

"राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः खले खलाः ।
राजानमनुवर्तन्ते यथा राजा तथा प्रजाः" ॥

इति ।

तो यः स सर्वैरप्यवज्ञायते । पूजितं हि पूजयन्ति लोकाः। प्रजाकार्यं स्वयमेव पश्येत् । यथावसरमसङ्गद्वारं कारयेत् । दुर्दर्शो हि राजा कार्यविपर्यासमासन्नैः कार्यते, अतिसन्धीयते च द्विषद्भिः । वैद्येषु श्रीमतां व्याधिवर्धनादिव नियोगिषु भर्तृव्यसनवर्द्धनादपरो नास्त्याजीवनोपायः । कार्यार्थिनः पुरुषान् लञ्चा लुञ्चन्ति । लञ्चचरां भूतबलिं न कुर्यात् । लञ्चो हि सर्वपातकानामागमनद्वारम् । मातुस्तनमपि लुञ्चन्ति लञ्चोपजीविनः । लञ्चेन कार्याभिरुद्धः स्वामी विक्रीयते । प्रासादविध्वंसनेन लोहकीलक लाभ इव लञ्चेन राज्ञो ऽर्थलाभः । राज्ञो लञ्चेन कार्यकरणं कस्य नाम कल्याणम् । देवतापि यदि चौराणां मिलति कुतः प्रजानां कुशलम् । लञ्चेनार्थोपायं दर्शयन् देशं कोशं तन्त्रं मित्रं च भक्षयति । राज्ञा ऽन्यायकरणं

---

१ राज्ञा पूजितं सर्वे लोकाः पूजयन्ति । २ राजा स्वयं सर्वेषां दर्शनसुलभो भवेत् । ३ आसन्नैः सेवकैः कार्यविपर्यासः क्रियते दुर्दर्शस्य राज्ञः । शत्रुभिः सह अतिसन्धानमपि क्रियते कदाचित् । ४ तत्कुत इत्याह । वैद्येष्विति । यथा श्रीमतां रोगवर्द्धनेन वैद्यस्य लाभः तथा राज्ञः सङ्कटवर्धनेन सेवकाना लाभः भवति । अतस्ते आपदं वर्धयन्तीति भावः ।५ अधुना लञ्चग्रहणमाह । कार्यार्थिन इति। लञ्चः लञ्चग्रहणकर्ता अमात्यादिः । कार्यार्थिनः व्यवहारार्थिनः पुरुषान् लुञ्चति लुण्ठतीत्यर्थः ! ६ लञ्चचरां लञ्चग्राहिणाम् । ७ यस्मात् लञ्च गृण्हाति तस्य न्याय्यमन्याय्यं वा कार्यं कर्तव्यं भवति । अत. स स्वामिनः विक्रय एवेति भावः । ८ राज्ञः लञ्चग्रहणमन्याय्यमुपहासास्पदं चेत्याह । प्रासादेति । अत्र राजसत्ता प्रासादस्थानीया । तस्या विध्वंसनेन चोरवदाचरणेन तुच्छस्य लञ्चरूपस्य कीलस्य ग्रहणं उपहासास्पदमेव । ९ लञ्चग्रहणादिरूपस्य अन्यायस्य करणम् । समुद्र एव मर्यादामुल्लङ्घयति चेत् को नाम तत्र शरणम् । एवं राजैव स्वयमन्यायं करोति चेत् को नाम तस्य दण्डयिता? न कोऽपीत्यर्थः । निदर्शनान्तरमाह । सूर्यस्येति । कलेः प्रभाव एव इति भावः ।

समुद्रस्य मर्यादालङ्घनमिव, आदित्यस्य तमःपोषणमिव, मातुश्चापत्य भक्षणमिव कलिकालविजृम्भितानि। राजा विशिष्टस्य कालस्य कारणम्। न्यायतः परिपालके राज्ञि प्रजानां कामदुघा दिशः। काले च वर्षति मघवान्। सर्वाश्चेतयः प्रशाम्यन्ति। राजानमनुवर्तन्ते सर्वे हि लोकपालाः। तेन मध्यममप्युत्तमं लोकपालं राजानमाहुः। अव्यसनेन क्षीणधनान्मूलधनप्रदानेन सम्भावयेत्। राज्ञो हि समुद्रावधिर्मही स्वकुटुम्बं कलत्राणि वंशवर्द्धनक्षेत्राणि। अर्थिनामुपायनमप्रतिकुर्वाणोऽप्रतिगृह्णीयात्। आगन्तुकैश्चासहनैश्च सह नर्म न कुर्यात्। पूज्यै. सहाधिरुह्य न वदेत्। भृत्यमशक्यप्रयोजनं नाशया क्लेशयेत्। पुरुषो हि पुरुषस्य न दासः, किन्तु धनस्य। को नाम धनहीनो न भवति-

---

१ "राज्ञि धर्मिणि" इत्युक्त प्रकारेण। २ न्यायतः प्रजापालने फलमाह। कामदुघा इति। मघवान् इन्द्रः। ३ लोकपालाः इन्द्र-वरुणादयोऽष्टौ। ४ मध्यमलोकः मनुष्यलोक तस्य पालको ऽपि राजा उत्तमलोकस्य स्वर्गस्य पालकः इन्द्र इव भवति। ५ मूलधन व्यवसायिनां व्यवसायार्थं गृह्यमाणं भाण्डसंज्ञक धन तस्य प्रदानेन। ६ अर्थिनां व्यवहारार्थिना उपायन उपप्राह्यम्। ६ आगन्तुकैः अपरिचितैरित्यर्थः। असहनैः नर्मकृतहासादिसहनाक्षमैश्च सह नर्म न कुर्यात्। श्रूयते हि रुक्मिणा द्यूतप्रसङ्गे परिहासितः बलदेवस्तं लागलेन घातयामासेति। ७ अधिरुह्य आसनादौ स्थित्वा। ८ अशक्यप्रयोजनं कार्याक्षम आशया। पारितोषिकादीनामिति शेषः। न क्लेशयेत्। पारितोषिकादिलोभदर्शनेन अशक्ये कार्ये भृत्यं न प्रेरयेदिति भावः। ९ ननु—अशक्ये कार्ये स कथ प्रवृत्तो भवेत्? इति चेदाह। पुरुष इति। पुरुषः पुरुषस्य न दासः, अपि तु धनस्य। एतदेवोक्तं महाभारते भीष्मपर्वणि युधिष्ठिरं प्रति भीष्मेण।

लघुः । सर्वधनेषु विद्यैव धनं प्रधानम् । अहार्यत्वात्सहानुयायित्वाच्च । सरित् समुद्रमिव नीचोपगतापि विद्या दुर्दर्शनं राजासङ्गमयति, परन्तु भाग्यानां व्यापारः । सा खलु विद्या विदुषां कामधेनुः, यतो भवति समस्तजगतः स्थितिपरिज्ञानम् । लोकव्यवहारज्ञो हि मूर्खोऽपि सर्वज्ञः । अन्यस्तु प्राज्ञोऽप्यवज्ञायत एव । ते खलु प्रज्ञा पारमिताः पुरुषाः ये कुर्वन्ति परेषां प्रतिबोधनम् । अनुपयोगिना महतापि किं जलधिजलेन ।

## इति स्वामिसमुद्देशः । १७ ।

—:-:—

चतुरङ्गयुतोऽपि नानमात्यो राजास्ति, किं पुनरेकः । नैकस्य

---

" अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्य महाराज बद्धोऽस्म्यर्थेन कौरवै " ॥

इति । तस्मादर्थलोभेन भृत्योऽशक्ये ऽपि कार्ये प्रवृत्तो भवेदिति भावः ।

१ विद्याधनस्य प्राधान्ये हेतुमाह । अहार्यत्वा दिति । २ राजा हि नीचानां दुर्दर्शनः तथापि विद्या तं दर्शयति । यथा सरित् स्वप्रवाहगतं वस्तुजात सुदूरस्थमपि समुद्र प्रापयति तथा विद्या नीचमपि पुरुष राजान सङ्गमयति । राज्ञः सङ्गमे ऽपि तस्माल्लाभादिक भविष्यत्येवेति न निश्चयः । तत्तु भाग्याधीनम् । २ कामधेनु मनोरथपूरणकर्त्री । व्यवहारचतुर्थप्रदात्री विद्या मनोरथान्पूरयतीति भावः । ३ व्यवहारचातुर्यस्य प्राधान्यमाह । लोकेति । मूर्खः अविद्वान् ।

४ अन्यः व्यवहारचातुर्यानभिज्ञः । ५ ये परेषां प्रतिबोधनं उपदेशादिना कुर्वन्ति ते प्रज्ञायाः पारं इताः प्राप्ताः । ६ परेषां प्रतिबोधनमकुर्वतः प्रज्ञाया वैफल्यमाह । अनुपयोगिन इति । यथा महदपि जलधेर्जल अनुपयुक्तत्वान्निष्फलम् । तथा परेषामनुपयुक्ता प्रज्ञा निष्फला भवति ।

७ वक्ष्यमाणलक्षणैश्चतुर्भिरप्यङ्गैर्युतो ऽपि राजा वक्ष्यमाणलक्षणैरमात्यैर्विना राजा न भवति । ८ एकस्य । राज्ञ इति शेषः ।

कार्यसिद्धिः । नह्येकं चक्रं परिभ्रमति । किं प्रवातः सेन्धनोऽपि वन्हिर्ज्वलति । स्वकर्मोत्कर्षापकर्षाभ्यां-दान-मानाभ्यां सहोत्पत्ति-विपत्ती येषां त अमात्याः। आय-व्ययस्वामिरक्षा तन्त्रपोषणं चामात्यानामधिकारः । आय-व्ययमुखयोर्मुनिकमण्डलुर्निदर्शनमेव । आयो द्रव्यस्योत्पत्तिमुखम् । यथा स्वामिशासनं अर्थस्य विनियोगो व्ययः । अयमनालोच्य व्ययमानो वैश्रवणोऽपि श्रमणायते । वाक्यं राज्ञः शरीरं धर्मः कलत्रमपत्यानि च स्वामिशब्दार्थाः । तन्त्रं चतुरङ्गबलम् । तीक्ष्णमशुचि व्यसनिनमशुद्धाभिजनं बलवत्पक्षं अशक्यप्रत्यावर्तनं अतिव्ययशीलं अल्पायं अन्यदे-

---

१ अत्र दृष्टान्तमाह । किमिति । प्रवातः वाताभिमुखः । २ अमात्यलक्षणमाह । स्वेति । स्वस्य कर्मण उत्कर्षापकर्षाभ्या दान-मानाभ्यां च राज्ञा सह येषां उत्पत्ति-विपत्ती भवतः ते अमात्याः । ३ तेषामधिकारमाह । आयेति वक्ष्यमाणलक्षणानामाय-व्ययादीनामवलोकनं अमात्यानामधिकारः । ४ मुनिकमण्डलु आय-व्यययोर्निदर्शन भवति । यथा पृथुबुध्नोदरः अल्पग्रीवः विस्तृतमुखश्च मुनिजनानां कमण्डलुः जलस्य ग्रहण त्वरया करोति । विसर्गे च सूक्ष्मनलिकारूपेण तेन मुखेन शनैः शनैर्जल विसृजति तथा. महता प्रमाणेनायं कृत्वा अल्पप्रमाणेन व्ययः कार्य इत्यर्थः । ५ आयस्वरूपमुक्त्वा व्ययस्वरूपमाह । यथेति । वक्ष्यमाणलक्षणस्य स्वामिनः शासनमनतिक्रम्य अर्थस्य विनियोगो व्ययः स्यात् । ६ आयादधिकव्यये निषेधमाह । आयेति। श्रमणायते श्रमणो भिक्षु तद्वदाचरति दरिद्रो भवतीत्यर्थः । ७ स्वामिशब्दस्य अर्थमाह । वाक्यमिति । राज्ञः-वाक्य, शरीर, तत्कृतो धर्मः, कलत्रं अपत्यानि च स्वामिशब्देन गृह्यन्ते । अत एतद्विरोधे स्वामिविरोध एव भवति । ८ वर्ज्यस्यामात्यस्य लक्षणान्याह । तीक्ष्णं क्रूरस्वभावम् । द्यूतादिव्यसनोपहतम् । अशुद्धः अर्थात् हीनः अभिजनः कुल यस्य । अशक्यं

शायातं अतिचिक्कणं चामात्यं न कुर्वीत । तीक्ष्णो ऽभियुक्तः स्वयं म्रियते मारयति वा स्वामिनम् । बलवत्पक्षो नियोग्यनियुक्तो जलकल्लोल इव मत्तगज इव च समूलं नृपाङ्घ्रिपमुन्मूलयति । अल्पायो महाव्ययो भक्षयति राजार्थम् । अल्पायसुखो महाजन परिग्रहोः पीडयति । नागन्तुकेष्वर्थाधिकारः प्राणाधिकारो वास्ति, यतस्ते स्थित्वापि गन्तारो ऽपकर्तारो वा । स्वदेशजे ऽर्थः कूपे पतित इव कालान्तरेऽपि लब्धुं शक्यते । चिक्कणादर्थलाभः पाषाणाद्वल्कलोत्पाटनमिव । सोऽधिकारी यः स्वामिनं*

प्रत्यावर्तन कार्यात्प्रतिनिवर्तनं यस्य । अल्पायमप्यातिव्ययशीलम् । चिक्कण अतिमृदु च अमात्य न कुर्वीत ।

१ तीक्ष्णादेर्निषेधे हेतुमाह । तीक्ष्ण इति । तीक्ष्णः परेण अभियुक्तश्चेत्स्वय म्रियते स्वामिन वा मारयति । अविचारित्वादिति भावः । २. बलवान् पक्षो यस्य स बलवत्पक्षः । स नियोग्ये कर्मणि नियुक्तः जलप्रवाहवत् मतङ्गज इव च स्वामिन मूलतः उन्मूलयति । अतस्तादृशो ऽमात्यो न कर्तव्य. । ३ अल्पायमहाव्ययनिषेधमाह । अल्पेति । राज्ञः अर्थं द्रव्यं भक्षयति । ४ अल्पायो ऽपि महाजनैः परिगृहीतश्चेत् पीडयति । प्रजा इति शेषः । ५ आगन्तुकस्य निषेधे हेतुमाह । आगन्तुकेति । आगन्तुकेषु अर्थस्य द्रव्यस्य व्ययाधिकारो न देय इत्यर्थः । कुत इत्यत आह । यतस्ते देशान्तरे गन्तारः, प्रसङ्गवशादपकारकर्तारो ऽपि भवन्ति । तस्मात्स्वदेशज एवामात्यः कर्तव्यः । ६ ननु— स्वदेशजोऽपि धनापहारी भविष्यति चेत् कागतिरित्यत आह । स्वेति । स्वदेशजे यदि अर्थो गतश्चेत् स कूपे पतितवस्तुवत्कालान्तरे लब्धु शक्यते न तथा परदेशीये ।७ चिक्कणः कृपणः । तस्मादर्थस्य लाभः पाषाणात् वल्कलस्य प्राप्तिरिव दुर्लभ इत्यर्थः ।

* 'स्वामिनः' इति पाठान्तरम् ।

सति दोषे सुखेन निगृहीतुमनुगृहीतुं वा शक्यते । ब्राह्मणः क्षत्रियः सम्बन्धी वा नाधिकारी कर्तव्यः । ब्राह्मणो जातिवशात्सिद्धमप्यर्थं प्रयच्छति न प्रयच्छति वा । क्षत्रियो ऽभियुक्तः खड्गं दर्शयति । ज्ञातिभावेनातिक्रम्य सामवायिकान्सर्वमप्यर्थं ग्रसते बन्धुः । स बन्धुस्त्रिविधः । श्रौतो मैत्रो यौनश्चेति । पितृपैतामहाद्यागतः श्रौतः । आत्मना प्रतिपन्नो मैत्रः । योनेर्जातो यौनः वाचिकसम्बन्धे नास्ति सम्बन्धान्तरावृत्तिः । न तं कमप्यधिकारिणं कुर्यात्, सत्यपराधे यमुपहत्यानुशयेत् । मानो ऽधि-

---

१ अधिकारी अमात्यादिः । यः स्वामिनि राज्ञी–दुष्टे सति निगृहीतु, गुणवति सति अनुगृहीतु च समर्थो भवति स अधिकारी भवितु योग्य इत्यर्थः । २ अधिकारी कः कर्तव्य इत्याकाङ्क्षायां प्रथम वर्ज्यानाह । ब्राह्मण इति । ३ ब्राह्मणादीना वर्ज्यत्वे हेतुमाह । ब्राह्मण इति । जातिवशात् स्वजातिस्वभावात् । द्रव्य लोलुपत्व कातरत्व चेति ब्राह्मणजातेःस्वाभाविका दोषाः । ४ क्षत्रियस्य निषेधे हेतुमाह । क्षत्रिय इति । क्षत्रियः कदाचिदभियुक्तः विरोधी चेत् खड्ग दर्शयति । स्वामिने इति शेषः । तद्धस्तगतोऽर्थः शस्त्रप्रहार विना नोपलभ्यते अतः स न कर्तव्य इति भावः । ५ सम्बधिनः निषेधे हेतुमाह । ज्ञाति भावेनेति । बन्धुः सम्बन्धी अह स्वामिनः सम्बन्धीति स्मयेन सामवायिकानन्यान् अधिकारिणः अतिक्रम्य स्वयमेव सर्वमर्थ ग्रसते । इतराननादृत्य स्वयमेव प्रबलो भवतीत्यर्थः । ६ अथ बन्धोरवान्तरभेदानाह । श्रौत इति श्रौतादिभेदै त्रिविधो बन्धुरित्यर्थः । ७ श्रोतस्य निरुक्तिमाह । पितृ–पैतामहेति । कुलक्रमेण सम्बन्धी श्रौतः । ८ आत्मना स्वयमेव प्रतिपन्नः प्राप्तः बन्धुत्वेन स्वीकृतः मैत्र इत्युच्यते । ९ वाचिकसम्बन्धे मैत्रादौ सम्बन्धान्तरस्य कायिकस्य सम्बन्धस्य आवृत्तिर्नास्ति । नापेक्षितेत्यर्थ. । १० सामान्यनिषेधमाहृत्य यमुपहत्य । अनुशयेत् पश्चात्तापयुक्तो भवेत् एतादृश कमपि अधिकारिणं न कुर्यात् । ११ अथान्यानपि निषेधानाह । मान इति । मान. मानवानित्यर्थः ।

---

× पुस्तकान्तरे ' ०प्यधिकाधिकारिण ' इति पाठः ।

कारी राजानमवज्ञाय निरवग्रहश्चरति । चिरसेवको नियोगी नापराधेऽप्याशङ्कते । उपकर्ताधिकारी उपकारमेव ध्वजीकृत्य सर्वमेवार्थं लुम्पति । सहपांसुक्रीडितो ऽमात्यो ऽतिपरिचयात्स्वयमेव राजायते। अन्तर्दुष्टो नियुक्तः सर्वमनर्थमुत्पादयति । शकुनि-शकटालावत्र दृष्टान्तौ । सुहृदि नियोगिनि अवश्यं धनं मित्रनाशः । मूर्खस्य नियोगे भर्तुर्धर्मार्थयशसां सन्देहः, निश्चितौ चानर्थ-नरकपातौ । सो ऽधिकारी चिरं नन्दति, यः स्वामिप्रसादे नोत्सिकयति । किं तेन परिच्छदेन, यत्रात्मक्लेशे न कार्यं सुखं वा स्वामिनः । का नाम [10]निर्वृतिः स्वयमूढतृणभोजिनो ग-

---

१ चिरसेवनेन अतिपरिचयात् । किमय मे करिष्यति—इति मत्वा स्वामिनः अपराधकरणे न शङ्कां बिभर्ति । अतश्चिरसेवकोऽमात्यो न कर्तव्य इत्यर्थः । २ उपकारकर्ताऽपि न कार्य इत्याह । उपकर्तेति । यत उपकारकर्ता उपकारमेव ध्वजीकृत्य अग्रे कृत्वा प्रधान कृत्वेत्यर्थ. । ३ बालमित्रोऽपि न कर्तव्य इत्याह । सहेति । सह पांसुषु क्रीडितः।स्वामिना सह इति शेषः। राजायते स्वयमेव राजवद्वर्तते । ४ अन्तः मनसि दुष्टः दुष्टबुद्धिः द्वेषयुक्तो वा अनर्थमुत्पादयति अतो न कार्यः । अत्र निदर्शनमाह । शकुनिरिति । शकुनिर्नाम गान्धारराजस्य सुबलस्य पुत्रः दुर्योधनस्य अमात्यो मातुलश्चास । स स्वस्य दुष्टस्वभावेन पाण्डवैः सह वैररूपमनर्थमुत्पाद्य स्वामिनमात्मना सह घातितवानिति प्रसिद्धम् । शकटालो नाम राज्ञो नन्दस्य मन्त्री । स च राज्ञा गुहायां निरुद्धः पश्चात् स्वपदं प्रापितः द्वेषयुक्तो भूत्वा चाणक्येन नन्दं घातितवानिति बृहत्कथायां प्रसिद्धम् । ६ सुहृदपि नियोगी न कर्तव्य इत्याह । सुहृदीति । ७ मूर्खस्य नियोगे तु ऐहिक—पारमार्थिकपुरुषार्थनाशो भवतीत्याह । ८ स्वामिनः प्रसादे सति नोत्सेकयति उन्मत्तो भवति । ९ आत्मनः क्लेशेऽपि स्वामिनः कार्यं सुखं वा न भवति । १० निर्वृतिः सुखम् ।

जस्य । अस्त्रेण[1] धर्मिणः पुरुषाः कर्मसु विनियुक्ता विकुर्वते, तस्मादहन्यहनि तान्परीक्षेत् । मार्जारेषु दुग्धरक्षणमिव[2] नियोगिषु विश्वासकरणम् । 'ऋद्धिश्चित्तविकारिणी[3] नियोगिनां' इति सिद्धानामादेशः । सर्वोऽप्यातिसमृद्धो[4] भवत्यायलाभसाध्यः कृच्छ्रसाध्यः स्वामिपदाभिलाषी वा । भक्षणमुपेक्षणं प्रज्ञाहीनत्वमुपरोधः व्यात्पार्थाप्रवेशो द्रव्यविनिमयश्चे[5]त्यमात्यदोषाः । बहुमुख्यमनित्यं[6] च करणं स्थापयेत् । स्त्रीष्व[7]र्थे च मनागप्यधिकारेण जातिसम्बन्धः । स्व-परदेशजावनपेक्ष्याऽनित्यश्चा[8]धिकारः । आदायक-निबन्धक-प्रतिकण्टकानविग्राहक-राजाध्यक्षाः[9] करणानि । आय-व्ययविशुद्धं[10] द्रव्यनीवीनिबन्धकमुस्तकग्रहणपूर्वकमाय-व्ययौ विशोधयेत् । आयव्यये[11] विप्रतिपत्तौ कुशलकरण-

---

१ अस्त्रेण धर्मिणः अस्त्रनिपुणाः शूरा वा । विकुर्वते विक्रियां प्राप्नुवन्ति उन्मत्ता भवन्तीत्यर्थः । २ दुग्धरक्षणकार्ये ऽधिकृतः । ३ ऐश्वर्येण चित्तस्यविकारो भवतीत्याह । ऋद्धिरिति । ४ यः कोऽपि भृत्यः आयलाभसाध्यः आयेन लाभेन च साध्यः । ५ अमात्यदोषानाह । भक्षणेति । उपेक्षणं कार्याणाम् । उपरोधः आमात्यादीनाम् । ६ करणस्थापनप्रकारमाह । करण राज्यतन्त्र तद्बहुमुख बहूनामधिकारिणां बुद्ध्या निर्वहणीयं कुर्यात् । एकोऽधिकारी स्वेच्छया कदाचिदनर्थमप्युत्पादयेत् । ७ स्त्रीषु अर्थेच न कस्याप्यन्यस्याधिकार कुर्यादित्याह । स्त्रीष्विति । ८ देशान्तरागतेष्वधिकारो सर्वथा न देय इति न, अपि तु स किंचिदपेक्ष्या नित्य एव दातव्यः । अनतु कदाचिदपि नित्यः । ९ अधुना राजाध्यक्षानाह । आदायकेति । १० प्रजाभ्यो द्रव्यग्रहणे बन्धक मुस्तकच गृहीत्वा आय-व्ययौ विशोधयेत् । ११ आय-व्ययविप्रतिपत्तौ कि कर्तव्यमित्याह? आयेति । कुशलानि करणानि येषा तादृशान् कार्यपुरुषान् विनियुज्य आयव्ययविप्रतिपत्तौ कर्तव्यनिश्चय कुर्यात् । विप्रतिपत्तिः तुल्यबलविरोधः । यथा—व्ययपर्याप्तः आयो नास्ति तथापि व्ययस्य अवश्यकरणीयत्व वर्तते । तत्र कुशलपुरुषैर्विविच्य सति महति प्रयोजने आयादधिकमपि व्यय कुर्यात् । प्रयोजनाभावे तु न कदाचिदपीत्यर्थः ।

कार्यपुरुषेभ्यस्तावद्विनिश्चयः नित्यपरीक्षणं कर्मविपर्ययः प्रतिपत्तिदानं च नियोगिषु अर्थग्रहणोपायाः । नापीडिता नियोगिनो दुष्टव्रणा इवान्तःसारमुद्वमन्ति । पुनःपुनरभियोगो नियोगिषु महीपतीनां वसुधारा । सकृन्निपीडितं हि स्नानवस्त्रं किं जहाति सार्द्रत्वं? । देशमपीडयन्बुद्धि-पुरुषकाराभ्यां पूर्वनिबन्धनमधिकं कुर्वन्नर्थ-मानौ लभेत । यो यत्र कर्मणि कुशलस्तं तत्र विनियोजयेत् । न खलु स्वामिप्रसादः सेवकेषु कार्यनिबन्धने हेतुः, किन्तु बुद्धि-पुरुषकारावेव । शास्त्रविदपि अदृष्टकर्मा कर्मसु विषादं गच्छेत् । अनिवेद्य भर्तुर्न किंचिदारम्भं कुर्यात् । अन्यत्रापत्प्रती-

---

१ कर्मविपर्ययः अधिकारान्तरे नियोजनम् । २ अपीडिताः नित्यपरीक्षणादिना अभीषिताः ।३ अभियोगः शासन भयपूर्वकमाव्हानम् । वसुधारा नित्यं धनदात्री । अभियोगेन सर्वदा तेभ्यो धनलाभो भवतीति भावः। ४ पुनः पुनर्निपीडने दृष्टान्तमाह । सकृदिति । यथा एकवारं निपीडीतं स्नानवस्त्र आर्द्रत्व न जहाति तथा पुन. पुनर्न निपीडिताः कार्यपुरुषा अर्थ न ददति इति भावः । ५ अधुना अर्थग्रहणे प्रकारमाह । देशेति । पूर्वनिबन्धनं पूर्वनिश्चित कृष्यादिभ्यो ग्रहीतव्यः कर. । स देशपीडनमकृत्वा बुद्ध्या प्रयत्नेन कृष्युपयोगिसाधनवर्धनेन च पूर्वस्मादधिकी ग्रहीतव्य इत्यर्थ. । ६ विभिन्नेषु कर्मसु पुरुषनियोजनप्रकारमाह । यो यत्रेति ।७ कुशलाकुशलत्वमविचार्य केवल स्वप्रसादभाजन एव न नियोक्तव्य इत्याह । नेति । स्वामिप्रसादेन अकुशलस्य कुशलत्व नायाति किन्तु पुरुषप्रयत्नेन बुद्ध्या च स योग्यो भवतीत्यर्थः । ८ न केवल शास्त्रविदपि कर्मकुशलो भवतीत्याह । शास्त्रेति । अदृष्टकर्मा अदृष्टकार्य इत्यर्थ. । ९ भर्तुः वरिष्ठाधिकारिणः । आरम्भ कार्यारम्भ न कुर्यात् । नियोगीति शेषः । १० अस्यापवादमाह । अन्यत्रेति । आपत्तौ भर्त्रनुज्ञाप्रतीक्षा न कर्तव्येत्यर्थः ।

कारेभ्यः । सहसोपचितार्थो मूलधनमात्रेणावशेषयितव्यः। मूले-धनाद्द्विगुणाधिको लाभो भाण्डस्थो वणिजो भवति राज्ञः। पर-स्परकलहो नियोगिषु भूभुजां निधिः। नियोगिलक्ष्मीः क्षितीश्व-राणां द्वितीयः कोशः। सर्वसङ्ग्रहेषु धान्यसङ्ग्रहो महान्। यन्नि-बन्धनं जीवितं सकलः प्रयासश्च। न खलु मुखे निक्षिप्तं महद-पि द्रव्यं प्राणत्राणाय, यथा धान्यम्। धान्येषु चिरजीविनः कोद्रवाः। जीर्णं नवेन वर्द्धयितव्यं व्याययितव्यं च। लवणसङ्ग्रहः

---

१ सहसा अकस्मात् उपचितः अर्थो यस्य स सहसोपचितार्थः वणिक्। मूलधनं भाण्डं तेन अवशेषयितव्यः। मूलधनात् द्विगुणाधिकं धनं चेत् तस्य मूलध-नात् द्विगुणं वर्जयित्वा अन्यत्सर्वं राज्ञा ग्रहीतव्यम्। यतः कपट-चौर्याद्यमार्गाचरण विना अकस्माद्धनागमो न स्यादिति हेतोः। २ तत्र हेतुमाह। मूलधनेति। यतः मूलधनात् द्विगुणो लाभः वणिजः, तदधिको लाभः वणिजो न भवति, स तु राज्ञ एव। एतेन सहसोपचितार्थो वणिक् मूलधनावशेषः कर्तव्य इतिः सिद्धम्। ३ नियोगिषु परस्परं कलहः राज्ञो लाभायेत्याह। परस्परेति। यतः परस्पर कलहायमाना नियोगिनो—एकस्यापराधं द्वितीयः तस्यापराधं पूर्वः एवं परा-पराधान् आवेदयन्ति। तेन च दण्डादिद्वारा राज्ञो लाभो भवतीत्यर्थः। ४ नि-योगिनामैश्वर्यं राज्ञ एवेत्याह। नियोगीति। द्वितीयः स्वकोशादन्य इत्यर्थः। ५ अधुना धान्यसङ्ग्रहस्य महत्वं वर्णयति। सर्वसङ्ग्रहेष्विति। ६ तस्य महत्वं वर्णयति। यदिति। जीवितं अन्यः सर्वोऽपि प्रयासश्च। मनुष्याणामि-ति शेषः। धान्यनिबन्धन एव अतस्तस्य सङ्ग्रहः कर्तव्य इत्यर्थः। ७ मुखे निक्षिप्तं धनं धान्यवत्प्राणत्राणाय यतो न भवति अतो धान्यसङ्ग्रह एव महा-निति भावः। ८ चिरजीविधान्यमाह। धान्येष्विति। कोद्रवाः श्यामाकाः भाषायां 'सांवे' इति प्रसिद्धाः। चिरकालस्थायिनः। ९ चिरजीवित्वात् न केवलं श्यामक सङ्ग्रह एव कर्तव्य इत्याह। जीर्णमिति। जीर्णं धान्यमन्येभ्यो दत्वा नवं ग्रहीतव्यमित्यर्थः।

र्वरसनामुत्तमः । सर्वं सरसमप्यलवणमन्नं गोमयायते ।

—०:०—

## इति अमात्यसमुद्देशः । १८ ।

पशु-धान्य-हिरण्यसम्पदा राजते शोभते इति राष्ट्रम्। भर्तुर्दण्डकोशवृद्धिं दिशति ददातीति देशः । विविधवस्तुप्रदानेन स्वामिनः सद्मनि गजान् वाजिनश्च विषिणोति बध्नातीति विषयः । सर्वकामदुघत्वेन नरपतिहृदयं मण्डयति भूषयतीति मण्डलम् । जनस्य वर्णाश्रमलक्षणस्य द्रव्योत्पत्तेर्वा पदं स्थानं इति जनपदः । जनपतेरुत्कर्षजनकत्वेन हृदयानि दारयति भिनत्ति इति दारकः। आत्मसमृद्ध्या स्वामिनं सर्वव्यसनेभ्यो निर्गमयतीति निर्गमः ।

---

१ धान्यसङ्ग्रहवद्रससङ्ग्रहो ऽपि कर्तव्य इत्याह । सर्वेति । लवणस्य सर्वरसानामुत्तमत्वादावश्यकत्वाच्च सङ्ग्रहः कर्तव्य इति भावः । लवणस्योत्तमत्वमेवाह । सर्वमिति । सरसमप्यन्नं लवणं विना गोमयवद्रुचये भवतीति । अनस्तस्य मुख्यत्वात्सङ्ग्रहः कर्तव्य इत्यर्थः ।

---

२ राष्ट्रशब्दस्य व्युत्पत्तिमाह । पशुधान्येति । पशुभिः गवाश्वादिभिः । धान्येन गोधूम-तन्दुलादिना हिरण्येन च शोभते तद्राष्ट्रम् । ३ देशशब्द-व्युत्पत्तिमाह । भर्तुरिति । दण्डशब्देन अधिकार एव ग्राह्यः । नतु सामान्योपस्थितिः दण्डः । तस्य वृद्धौ अपराधवृद्धिः । अपराधवृद्ध्या च देशस्थितिभङ्गः । ४ विषयशब्दव्याख्यामाह । विविधेति । ५ मण्डलशब्दार्थमाह । सर्वकामेति । ६ जनपदशब्द व्युत्पत्तिमाह । जनस्येति । राष्ट्र–देश–विषय–मण्डल–जनपदशब्दा एकार्थकत्वे ऽपि तारतम्येन भिन्नार्थवाचकाः । ७ दारकशब्दव्याख्यामाह । जनपतेरिति । ८ निर्गमशब्दव्याख्यामाह । आत्मसमृद्ध्येति ।

अन्योऽन्यरक्षकः खन्याकरद्रव्य-नागधनवान्नातिवृद्धहीनग्रामो बहुसारविचित्रो धान्य-हिरण्य-पण्योत्पत्तिरदेवमातृकः पशुमनुष्यहितः श्रेणि-शूद्र-कार्षूप्राय इति जनपदस्य गुणाः । विष तृणोदकोषर-पाषाण कण्ठक-गिरिगर्त-गव्हरप्रायभूमिर्भूरिवर्षाजीवनो व्याल-लुब्धक-म्लेच्छबहुलः स्वल्पसस्योत्पत्तिस्तरुफलाधार इति देशदोषाः । तत्र सदादुर्भिक्षमेव, यत्र जलदेन सस्यानि-

१ अथ जनपदस्य गुणानाह । अन्योन्येति । राजा जनपदं रक्षयति जनपदश्च राजानं रक्षयति स अन्योन्यरक्षकः । यत्र च खानिः-सुवर्ण-रत्न-रौप्य-ताम्र-लोहादीनां गन्धकादिखनिजद्रव्याणां च उत्पत्तिः भवति । नागाः गजाः तदेव धन तस्य यत्रोपलब्धिः । यत्र च अतिवृद्धाः बहुजनसङ्कुला अतिहीना विरलजनाश्च ग्रामा न सन्ति । बहुभिः सारैः प्रधानवस्तुभिर्विचित्रः, धान्यस्य हिरण्यस्य च अन्यस्यापि क्रय-विक्रयद्रव्यस्य यत्र उत्पत्तिर्भवति, देवमाता देवेति प्रसिद्धा सा यत्र नास्ति तादृशः, पशूनां गवादीनां मनुष्याणां च हितः सुखकरः, श्रेणयः—

"तक्षा च तन्तुवायश्च नापितो रजकस्तथा ।
पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः" ॥

इत्यादिशिल्पिजनानां समूहः श्रेणिशब्दाभिधेयः सा श्रेणिर्यत्रास्ति, कार्षुकाः कृषीवलाः ते च बहवः सन्ति यत्र । एते जनपदस्य गुणाः । २ अथ दोषानाह । विषेति । यत्र तृणमुदकं च रोगकारकत्वात् विषसदृश, ऊषर क्षारमृत्तिकाविशिष्टः प्रदेश, पाषाणाः, कण्टकाः, गिरयः, गर्ता, गुहाश्च बहुलाः सन्ति तादृशा यत्र भूमिः, बहुवृष्ट्या च यत्र आजीवः जीवनोपायः धान्योत्पत्तिरित्यर्थः ।यत्र व्यालाः सर्पाः लुब्धका निषादादयः म्लेच्छाश्चापि बहुलाः सन्ति-सस्यस्य धान्यस्य यत्र स्वल्पा उत्पत्तिः एतादृशः । सस्याल्पत्वात् यत्र तरुफलाना मेव आधारः जीवनोपायः प्रजानाम् । एते देशस्य दोषाः एतैर्विशिष्टः देशो निन्द्य इत्यर्थः ।

भ्पत्तिः अकृष्टभूमिकश्चारम्भः । क्षत्रियप्राया हि ग्रामाः स्वल्पास्वपि बाधासु प्रतियुध्यन्ते । म्रियमाणोऽपि द्विजलोको न खलु सान्त्वेन प्रयच्छति सिद्धमप्यर्थम् । भूमिकं भूतपूर्वं वा जनपदं स्वदेशाभिमुख्यं दान-मानाभ्यां परदेशोपवाहनेन वा वासयेत् । स्वल्पोऽपि राष्ट्रेषु परप्रजोपद्रवो महान्तमर्थं नाशयति । क्षीरिषु कणिशेषु सिद्ध्यादयोजनमुदमुद्वासयन्ति(?) । लवनकाले सेनाप्रचारो दुर्भिक्षमावहति । सर्वा बाधाः प्रजानां कोशं कर्षयन्ति ।

---

१ अथावान्तरदोषानाह । तत्रेति । यस्मिन्देशे केवलया वृष्ट्यैव धान्योत्पत्तिर्भवति न नद्यादिजलेन । तत्र सदैव दुर्भिक्षं भवति । वृष्ट्या नियतत्वाभावात् । २ भूम्याः कर्षणं विना दोहदादिकरणं विना च कृषिकर्मण आरम्भः, तत्रापि दुर्भिक्षं सदैव भवति । अकृष्टपच्यत्वाभावात् भूमेः।३ ग्रामं न केवलं शूरपुरुषाणामेव वसतिः करणीया तथा सत्यनर्थो भवतीत्याह । यत्र केवलं क्षत्रियाः शस्त्रैकप्रधानाः शूरा इत्यर्थः। प्रायशो वसन्ति तत्र सुतरां अल्पास्वपि बाधासु पीडासु ते परस्परं युद्ध्यन्तो ऽनर्थं कुर्वन्तीत्यर्थः । ४ द्विजबहुलो ऽपि नेष्ट इत्याह । म्रियमाण इति । म्रियमाणा अपि द्विजा ब्राह्मणास्तेषां लोकः समुदायः । सिद्धमपि दातव्यत्वेन निश्चितमपि अर्थं राजदाय न ददाति । लुब्धत्वादित्यर्थः । ५ यदि कश्चन जानपद- जनपदवासी उपद्रवकारी स्वराज्ये वस्तुमिच्छेच्चेत् तं दान-मानाभ्यां सत्कारपूर्वकं वासयेदित्याह । भूमिकमिति । स्वदेशे आगतश्चेत् त वासयेत् परदेशे प्रेषयेदित्यर्थः । कुत इत्यत आह । स्वल्पेति । ६ परकीयप्रजायाः सकाशात् स्वल्पो ऽपि यदि स्वप्रजाया उपद्रवः भवति चेत् स महान्तमर्थं नाशयति । प्रजाया असन्तोषादिति भावः । ७ कणिशेषु धान्यमञ्जरीषु । ८ लवनकाले धान्यच्छेदनकाले । सैनिकाः अश्वादिसञ्चारेण बलादपहरणेन वा धान्यं नाशयन्ति ततो दुर्भिक्षं भवतीत्यर्थः । ९ उक्ता अनुक्ता वा सर्वा बाधाः प्रजानां कोशं कर्षयन्ति शोषयन्तीत्यर्थः ।

दत्तपरिग्रहान्विते वानुगृह्णीयात्। मर्यादातिक्रमे फलवत्यपि भूमिर्भवत्यरण्यानी। क्षीणजनसम्भावनं तृणशलाकाया अपि स्वयं सङ्ग्रहः। कदाचित्किञ्चनोपजीव्यनमितपरमः प्रजानां संवर्द्धनोपायः। न्यायेन रक्षिता पण्यपुटभेदनी राज्ञां कामधेनुः। राज्ञश्चरतुरङ्गबलाभिवृद्धिहेतवो भवेयुर्भूयांसो भक्तग्रामाः। सुमहच्चगोमण्डलं हिरण्याययुक्तं च शुल्कं कोशवृद्धिहेतुः। देवद्विजदेया गोरुतप्रमाणा भूमिर्दातुरादातुश्च सुखनिर्वाहा। क्षेत्र-वप्रखण्ड-गृह-धर्मायतनानामुत्तरः पूर्वबाधो न पुनरुत्तरं पूर्वः।

---

१ पूर्वदत्तस्य परिग्रहः सैनिकादिद्वारा स्वीकारो भवेच्चेत् त अनुगृह्णीयात्। राजेति शेषः। २ मर्यादातिक्रमे बाधकमाह। मर्यादेति। फलवती सस्यादिफलसम्पन्ना। अरण्यानी अफलेत्यर्थः। ३ क्षीणः कथञ्चित् द्रव्यनाशेन विपत्तिमापन्नः तस्य सम्भावनं साहाय्यं कर्तव्यम्। यथा तृणस्यापि सङ्ग्रहः कदाचिदुपयुक्तो भवति तथा क्षीणो ऽपि जनः कदाचिदुपयुक्तो भवतीत्यर्थः। ४ संवर्द्धनस्य वृद्धेः उपायः। ५ न्यायेन यथान्याय परिपालिता पण्यस्य क्रयविक्रयस्य पुटभेदनी नगरी कामधेनुरिव इष्टधनादिदात्री भवति। ६ सैन्यवृद्धिहेतुमाह। राज्ञ इति। भक्त ओदनः उपलक्षणमेतद्धान्यान्तराणाम्। सस्यशालिनो बहवो ग्रामाः चतुरङ्गस्य बलस्य सैन्यस्य पोषकत्वेन अभिवृद्धेः हेतवो भवन्तीति भावः। ७ कोशवृद्धिहेतुमाह। सुमहदिति। सुतरां महत् गवां मण्डलं हिरण्यादि च कोशस्य वृद्धेर्हेतुर्भवति। ८ अधुना देव-द्विजादीनां भूमिदाने कर्तव्ये कियत्प्रमाणा भूर्देयेत्यत आह। देवेति। गोशब्दः यावत्पर्यन्तं श्रूयते तावती भूमिर्दातव्या। न ततोऽधिका। तावत्या दानेन गृहीतुर्निर्वाहो भवति दाता ऽपि च न दरिद्रो भवतीत्यर्थः। ९ अधुना एकस्मिन्क्षेत्रे विभिन्नेषु कालेषु विभिन्नैः पुरुषैः वप्रखण्डादीनि कृतानि चेत्तत्र कस्य बलीयस्त्वं तदाह। क्षेत्रेति। प्रथममेकेन शून्यां भूमिं गृहीत्वा तस्य क्षेत्रं कृतं, अनन्तरमन्येन तस्य प्राकारः कृतः, ततोऽन्येन गृहं निर्मितं, ततोऽप्यन्येन तत्र धर्मा-

नामुद्रहस्तो ऽशोधितो वा कश्चित्स्वमण्डलविषये प्रविशेन्निर्गच्छेद्वा । श्रूयते हि किल हूणाधिपतिः पण्यपुटवाहिभिः सुभटैश्चित्रकूटं जग्राह । खेटक-खड्गसहायश्च भद्रः काञ्चीपतिमिति । न हि भर्तुरभियोगात्परः सर्वजनविशुद्धिहेतुरस्ति ।

—०:०—

## इति जनपदसमुद्देशः । १९ ।

यस्याभियोगात्परे दुःखं गच्छन्ति तद्दुर्गम् । दुर्जनोद्योगविषयाद्वा स्वस्य विजिगीषोरापदो गमयतीति दुर्गम् । तद्द्विविधम् । स्वाभा-

---

यतनं कृतं ततश्च तेषां परस्परं विवादे उत्तरोत्तर-क्षेत्रकर्ता प्रथमः ततोऽपि वप्रकृत् तस्मादपि गृहकृत् तस्मादपि धर्मायतनकृत् एव उत्तरोत्तरो बलीमान् न तु पूर्वपूर्वः ।

१ अमुद्रहस्तः यस्य हस्ते राजमुद्रा न दत्ता, य अशोधितः—कोऽयं कुत्रत्यः कस्मात् आगतः कुत्र वा गच्छति इति न विचारितः, कोऽपि मण्डलान्तरात् स्वमण्डल न प्रविशेत् स्वमण्डलाद्वा बहिर्न निर्गच्छेत् । २ अत्र सोदाहरण हेतुमाह । श्रूयत इति । हूणानामाधिपतिः पण्यवस्तुवाहकवेषेण स्वसैनिकान् प्रवेशयित्वा चित्रकूटं जग्राह स्ववश प्रापितवान् । अतो ऽशोधितः कोऽपि न प्रविशेदित्यर्थः । ३ उदाहरणान्तरमाह । खेटकेति । भद्रो नाम कश्चित् खेटका मृगयवः तद्रूपेण शूरपुरुषान् प्रवेशयित्वा काञ्चीपतिं विजितवान् इति श्रूयते । विद्वन्मुखादिति शेषः । ४ विशुद्धिहेतुमाह । नेति । भर्तुः राज्ञः अभियोगो हि विशुद्धेर्हेतुः न ततोऽन्यः ।

५ अथ दुर्गसमुद्देशं विवक्षुः प्रथमं दुर्गशब्दार्थमाह । यस्येति । यस्य अभियोगात्—कलहपूर्वकं युद्धार्थमाह्वानमभियोगः तस्मात् परे शत्रवः दुःखमनुभवन्ति तद्दुर्गम् । ६ व्याख्यान्तरमाह । दुर्जनेति । दुर्जनानां शत्रूणामन्वेषां वा य उद्योगः तस्मात् स्वस्य तान् जेतु मिच्छोः आपदः गमयति नाशयाति तद्दुर्गमित्यर्थः ।

विक्रमहार्यं च । वैषम्यपर्याप्तावकाशो वन्ह्युपवासेन्धनोदकभूयस्त्वं स्वस्य, परेषां च तदभावः, बहुधान्य-रससङ्ग्रहः, प्रवेशापसारौ वीराश्च पुरुषाः इति प्रत्येकं; प्राकार-गिरिकुलबन्धनं दुर्गवर्यस्येति दुर्गसम्पत् । अन्यद्धि दुर्गं बन्दिशालेव । अदुर्गो हि देशः कस्य नाम न भवति पराभवास्पदम् । अदुर्गस्य राज्ञः पयोधिमध्ये पोतच्युतपक्षिवदापदि नास्त्याश्रयः । उपायतोऽधिगमनमुपजापश्चिरमनुबन्धो ऽवस्कन्द-तीक्ष्णपुरुषप्रयोगश्चेतिपरदुर्गालम्भनोपायाः ।

---

१ शब्दार्थमुक्त्वा तद्भेदानाह । तदिति । स्वाभाविकं स्वभावतः उत्पन्नस्यैव पर्वत-जलाद्याक्रान्तत्वात् परेषामधृष्यं स्वाभाविक दुर्गम् । परिखा-प्राकारादिभि.कृत्रिमोपायैर्दुर्गमं कृतमहार्यम् । २ दुर्गभेदानुक्त्वा दुर्गसम्पदमाह । वैषम्येति । वैषम्येण उच्चनीचभावेन पर्याप्तो योऽयमवकाश. तत्र वन्हिप्रज्वलन इन्धनानामुदकानां च भूयस्त्व स्वस्य, परेषां जलाद्यभाव. । बहूना धान्यानां रसानां लवणादीनां च सङ्ग्रहः । तत्र परेषां प्रवेशस्य अपसारः निवारणं, यत्र च वीराः पुरुषाः, इति प्रत्येकस्मिन् प्राकारे नियत पर्वतशिखरादिषु च बन्धनं एतत्सर्वं दुर्गसम्पत् । २ विपरीतें बाधकमित्याह । अन्यदिति । उक्तसम्पद्रहित दुर्गं बन्दिशालासदृश स्वस्यैव नाशाय भवतीत्यर्थः । ३ अदुर्गो देशः परिभवास्पदं भवतीत्याह । अदुर्गेति । ४ दुर्गं विना राज्ञ आश्रयो नास्तीति सदृष्टान्तमाह । अदुर्गस्येति । पयोधेर्मध्ये पोतात् नौकायाः च्युतः पक्षी यथा आपत्तावनाश्रयो भवति तथा तस्यापदि आश्रयो-नास्तीत्यर्थः । ५ अधुना परदुर्गालम्भनोपायानाह । उपायत इति । अधिगमनं सन्नद्ध गमनं, उपजापो भेदः । अनुबन्धः दोषोत्पादनं, तीक्ष्णपुरुषा घातुकपुरुषाः तेषां प्रयोगः च एते परदुर्गस्य नाशे उपायाः कर्तव्या इत्यर्थः ।

इति दुर्गसमुद्देशः । १२० ।

—०:०—

यः सम्पदि विपदि च स्वामिनस्तन्त्राभ्युदयं करोति कोशयति संश्लेषयतीति स कोशः । सातिशयरत्न-हिरण्य-रजतप्रायो व्यावहारिपिण्याकबहुलो महापदि व्ययसहायश्चेति कोशगुणाः । कोशः संवयाति । कोशो हि महीपतीनां जीवनं न प्राणाः । क्षीणकोशो हि राजा पौरजानपदानन्यायेन ग्रसते राष्ट्र शून्यताभयात् । कोशो हि राजोच्यते, न शरीरम् । यस्य हस्ते द्रव्यं स जयाति । धनहीनः कलत्रेणापि परित्यज्यते, किं पुनर्नान्यैः । न खलु कुलाचाराभ्यां पुरुषः सर्वोऽपि सेव्यतामेति, किं तु वित्तेनैव । स

---

१ दुर्गसमुद्देशमुक्त्वा क्रमप्राप्त कोशसमुद्देशं वक्तुं आदौ कोशशब्दव्याख्यामाह । य इति । तन्त्रस्य पूर्वोक्तस्य अभ्युदय उत्कर्ष करोति, कोशयति एकीकरोति स कोशः । यथा कोशः तथेति भावः । २ कोशस्य गुणानाह सातिशयेति । यत्र रत्नानां हिरण्यानां च अतिशयः रजतस्य बाहुल्य व्यवहारोपयोगिपदार्थानां बाहुल्य, महत्यां आपदि व्यये सहायश्चेति कोशस्य गुणाः। ३ कोशस्य माहात्म्यमाह । कोश इति । हि यस्मात् कोश विना न तन्त्र चलति अतः कोशो राज्ञः जीवनं प्राणधारणसाधनमित्यर्थः । ४ कोशपरिक्षये राजा प्रजाभक्षको भवतीत्याह । क्षीणेति । पौरान् जानपदांश्च ग्रसते अन्यायेन द्रव्यसंपादनार्थ यत्नं करोतीत्यर्थः । कुत इति चेत्? राष्ट्रस्य शून्यता नाशः तस्य भयात् । ५ अतः कोश एव राजेत्याह । कोश इति । राज्ञः शरीरं न राजा अपितु कोश एव राजा इत्यर्थः । तत्र हेतुमाह । यस्य हस्ते वित्तं स राजा जयं प्राप्नोति नान्यः । अतः कोश एव राजेति भावः । ६ कलत्रेण भार्यया त्यज्यते किं पुनरन्यैः प्रजाजनैस्त्यज्यत इति वक्तव्यम्? । ७ धनेनैव पुरुषस्य श्रेष्ठत्वं न कुलेन आचारेण अन्यैर्वा विद्यादिभिर्गुणैरित्याह । धनेति ।

खलु महान्कुलीनश्च,यस्य धनमनूनम्[1]। किं तया महत्तया कुलीनतया वा,यान सन्तर्पयति परान्। किं तेन सरसो महत्वेन, यत्र न सन्ति जलानि[2]। देव-द्विज-वणिजां धर्माध्वरपरिजनानुपयोगिद्रव्यपरिभागैराढ्यविधवा-विनियोगि-ग्रामकूट-गणिका-सङ्घ-पाषण्डिविभवांश—प्रत्यादानैः समृद्धैः पौरजानपदद्रविणसंविभागप्रार्थनैरनुपक्षयश्रीकरण-मन्त्रि-पुरोहित-श्रोत्रिय-मित्र-सामन्तान्तपालानुनयप्रगृह्णगनाभ्यां क्षीणकोशः कोशं कुर्यात्[3]।

—०:०—

## इति कोशसमुद्देशः । २१ ।

द्रविणदान-प्रियभाषणाभ्यां आचारातिनिवारणेन च स्वामिनं सर्वास्ववस्थासु बलते संवृणोतीति बलम्[4]। बलेषु हस्तिनः

---

१ यत्र धनं तत्र कुलीनत्वादयः सर्वेऽपि गुणा आयान्तीत्याह । स इति । अनूनं विपुलम् । महत्वेन कुलीनतया वा न परान् प्रीणयति अतो धनमेव प्रधानमित्याह । किन्त्विति । २ अत्र दृष्टान्तमाह । किमिति । महतापि सरसा न किमपि । अपि तु जलपूर्णमल्पमपि सर्वैः सेव्यं भवतीत्यर्थः । ३ राज्ञा निजकोशवृद्धये केषां केषां धनं ग्राह्यं तदाह । देवेति । देवानां, द्विजानां, वणिजां, धर्माधिकारिणां च यदनुपयोगि केवलं सङ्ग्रहे स्थितं तस्य भागग्रहणं कर्तव्यम् । धनाढ्यानां सन्तानरहितानां विधवानां, ग्रामकूटा ग्रामाधिकारिणः तेषां, गणिकाः प्रसिद्धाः तासां कापालिकादिपाषण्डिनां च धनस्यांशो ग्राह्यः । उक्तानामेषां अधिकारेणैव ग्राह्यः । पौर–जानपदानां प्रार्थनापूर्वकं तेभ्यो याचनीयः । तथा च मन्त्रि–पुरोहितादिभ्योऽपि प्रार्थन–सत्कारादिनैव धनं सम्पादनीयम् ।

---

४ अधुना बलसमुद्देशं वक्तुं बलशब्दार्थमाह । द्रविणेति । संवृणोति रक्षतीत्यर्थः । ५ गजस्य चतुर्ष्वङ्गेषु प्राधान्यमाह । बलेष्विति ।

प्रधानमङ्गम् । यथा स्वैरवयवैरष्टायुधा हस्तिनो, न तथान्य-बलम् । हस्तिप्रधानो विजयो राज्ञाम् । यद्येको ऽपि हस्ती सहस्रं योधयति, न सीदति प्रहार सहस्रेणापि । जातिः कुलं वनप्रचारश्च न हस्तिनां प्रधानं, किं तु शरीरं बलं शौर्यं च शिक्षा च तदुचिता च सामग्रीसम्पत्तिः । अशिक्षिता हि हस्तिनः केवलं नृपाणामर्थ-प्राणहराः । सुखेन यानमात्मरक्षा परपुरामर्दनं परव्यूहविघातो जलेषु सेतुबन्धो वचनादन्यत्र सर्वविनोदहेतुत्वश्चेति हस्तिगुणाः । अश्वबलं सैन्यस्य जङ्गम आकारः । अश्वबलप्रधानस्य हि राज्ञः कदनकन्दुकक्रीडाः प्रसीदन्ति श्रियः ।

---

१ अन्यत् पादातादिकं अन्यैरायुधैः शस्त्री भवति, हस्ती तु स्वैरेवायुधैः दन्तादिभिरष्टभिः । २ राज्ञां विजये हस्तिरेव प्रधान इत्याह । हस्तीति । ३ तत्र हेतुमाह । यदीति । एकोऽपि हस्ती सहस्र योधयाति अतः राज्ञां जयस्तदायत्त इत्यर्थः । ४ यथा अश्वादीनां काम्बोजत्वादि जात्या उत्तमत्वं तथा न गजानामित्याह । जातिरिति । वनप्रचारः उत्तमे वने सञ्चार इत्यर्थः । एतत्त्रयमपि हस्तिनः न प्रधानं किन्तु शरीरादिपञ्चकमेव प्रधानम् । तदुचिता पूर्वोक्तशिक्षादिचतुष्टयोचिता । ५ उक्तेष्वप्येतेषु शिक्षैव प्रधानमित्याह । अशिक्षिता इति । अनुपयुक्तत्वात् पोषणनिमित्तमर्थहराः । युद्धेऽशिक्षितत्वात् प्राणहराश्च भवन्ति । ६ अधुना हस्तिनः गुणानाह । दुर्गमेष्वपि प्रदेशेषु सुखेन यान, आत्मनः अर्थादारूढस्य रक्षा रक्षणं, प्राकार–द्वारादि भेदनेन परस्य शत्रोः पुरस्य अवमर्दनं नाशः, परस्य सैन्यव्यूहस्य विघातो भेदनं, कदाचित् हस्तिशरीरेण नद्यादौ सेतुबन्धः । अन्यत्रापि सर्वेषां विनोदानां हेतुभूतत्वमेतं हि हस्तिनः गुणाः । ७ अथ अश्वबलमाह । अश्वेति । जङ्गमः अश्वानामतिचपलत्वात् । ८ अश्वबलस्य प्राधान्यमाह । अश्वेति यस्य राज्ञः अश्वबलं विद्यते तस्य कदनं युद्धमेव कन्दुकस्य क्रीडा यासां तादृशाः श्रियः प्रसीदन्ति ।

भवन्ति दूरस्था अपि शत्रवः करस्थाः । आपत्सु मनोरथसिद्धि-स्तुरङ्ग एव । सरणमपसरणमवस्कन्दः परानीकभेदनं च तुरङ्ग-मसाध्यमेतत् । समा भूमिर्धनुर्वेदविदो रथाधिरूढाः प्रहर्तारो यदा, तदा किमसाध्यं नाम नृपाणाम् । रथैरवमर्दितं परबलं सुखेन जीयते । मौल-भृतक-श्रेणिमित्रामित्राटविकेषु पूर्वंपूर्वं बलं मर्तुं सन्नाहयितुं यतेत । अन्यत्सत्यमेव औत्साहिकं बलम् । यद्विजिगीषोर्विजययात्राकाले परराष्ट्रविलोपनार्थमेव मिलति । सुहृत्त्वं क्षत्रसारत्वं अस्त्रज्ञत्वं स्वभावशूरत्वं अनुरक्तत्वं चेति बल-स्य गुणाः । मौलैबलाविरोधेनान्यद्बलमर्थ-मानाभ्यामनुगृह्णी-यात् । मौला ह्यापदि नगच्छन्ति, अपरोद्धा अपि नाभिद्रुह्यन्ति,

---

१ अश्वसैन्यस्य चपलत्वात् । क्षणमात्रेण विवक्षितप्रदेशगामित्वाच्च दूरस्थो ऽपि शत्रुः करस्थो भवति इति भावः । २ मनोरथसिद्धिः इच्छितकार्यसि-द्धि. । ३ अधुना अश्वस्योपयोगमाह । सरणेति । सरण अग्रे गमनं, अपसरण परावर्तन, अवस्कन्दः छलेन शत्रोराक्रमण, परस्य शत्रोरनीकस्य भेदन, च एतत्सर्वं तुरङ्गमसाध्यम् । न हस्ति-रथादिसाध्यम् । ४ अथ रथिनः स्तौति । समेति । एतेन युद्धभूमिः समाना चेत् रथिनो ऽपि धनुर्वेदनिपुणाश्चेत् रथाः राज्ञो जयाय भवन्ति नान्यथेति सूचितम् । किमसाध्य ? न किमपीत्यर्थः । ५ रथैः अवमर्दितं नाशितम् । ६ अथ सैन्ये केषां सङ्ग्रहः कर्तव्य इत्याह । मौलेति । मौलादिषु पूर्वपूर्वस्य सङ्ग्रहः कर्तव्य इत्यर्थः । ७ औत्साहिकं शत्रु-जयोत्साहेनैव प्राप्तम् । भाषायां 'पेन्डार' इति प्रसिद्धम् । ८ किं तदौत्साहि-कमित्याह । यदिति । यत् विजिगीषोः शत्रून्जेतुमिच्छोः । परराष्ट्रस्य विलोपन तस्मात् द्रव्य हरणम् । ९ अधुना बलस्य गुणानाह । सुहृत्त्वमिति । क्षत्रसा-रत्व बलिष्ठत्वम् । १० अन्यत् औत्साहिकादि । अर्थेन मानेन च अनुगृह्णीयात् तेषामनुरञ्जनार्थमित्यर्थः । एव करणे मौलानां नावमानः कर्तव्यः । ११ तत्र हेतुमाह । मौला इति । यतो मौला आपदि प्रभुं न त्यजन्ति, नाभिद्रुह्यन्ति, अभेद्याश्च भवन्ति अतस्तेषां विरोधो न कार्यः । अपितु तेषां सदासन्मान एव कर्तव्य इत्यर्थः ।

भवन्ति च परेषामभेद्याः। न तथार्थः पुरुषान्योधयति, यथा प्रभुसम्मानः । स्वयमनवेक्षणं देयाशापहरणं कालयापनं व्यसनाप्रतीकारो विशेषविधावसम्भावनं च तन्त्रस्य विरक्तिकारणानि। स्वावेक्षणीयं परैरवेक्षयन्नर्थ-तन्त्राभ्यां हीयते। आश्रितभरणे स्वामिसेवायां धर्मानुष्ठाने भोजने शयने पुत्रोत्पादने च न खलु सन्ति प्रतिहस्तकाः । तावद्देयं, यावदाश्रितो न सम्पूर्णत्वमाप्नोति । नहि स्वद्रव्यमव्ययमानो राज्ञो दण्डनीयः । को नाम सुचेताः स्वगुडं चौर्यात्खादेत् । किं तेन जलदेन, यःकाले न वर्षति। स किं स्वामी, य आश्रितेषु व्यसने न प्रतिविधत्ते । अविशेषज्ञे राजनि को नाम अर्थ-प्राणव्ययेनोत्सहते ।

## इति बलसमुद्देशः ॥ २२ ॥

—०:०—

सम्पदि विपद्यपि यो मेद्यति स्निह्यतीति तन्मित्रम् । यः कारणमन्तरेण रक्ष्यो रक्षको वा तन्नित्यं मित्रम् । तत्सहज मित्रं, यत्र

१ तन्त्रस्य विरक्तिकारणान्याह । स्वयमिति । कार्याणां स्वतो ऽनवलोकनम् । विशेषविधौ विशिष्टकार्ये । २ अथ अर्थस्य तन्त्रस्य च हानिमाह । स्वेति । स्वावेक्षणीय स्वयमेव द्रष्टव्यम् । कार्यमिति शेष । ३ केषु केषु कार्येषु प्रतिनिधयो न कर्तव्यास्तदाह । आश्रितेति । प्रतिहस्तका प्रतिनिधय. । आश्रिताय अधिक न देयमित्याह । तावदिति प्रतीकार न करोति ।

१ अथ मित्रसमुद्देशमाह । सम्पदीति । सम्पदि सर्वेऽपि स्निह्यन्ति, पर न न मित्रा. । यत् सम्पदि विपदि च स्निह्यति तदेव मित्रम् । २ सामान्यतो मित्रलक्षणमुक्त्वा तद्भेदान् विवक्षुः प्रथम नित्यमित्रमाह । य इति । कारण विनैव यो यस्य रक्षक. रक्ष्यो वा भवति तावुभौ परस्पर नित्य मित्र भवत. । ३ अथ सहजमित्रमाह । तदिति । सह जातं सहजम् । यस्य वंशपरम्परया कन्यादानादिरूप. श्लाघ्यः सम्बन्ध. समायातः स सहजो मित्रः ।

पूर्वपुरुषपरम्परया समायातः श्लाघ्यसम्बन्धः । यद्वृत्ति-जीवितहेतोराश्रितं तत्कृत्रिमं मित्रम् । व्यसनेषूपस्थानमर्थेषु विकल्पः स्त्रीषु परमं शौचं कोप-प्रसादविषये वा अप्रतिपक्षत्वमिति मित्रगुणाः । दानेन प्रणयः स्वार्थपरत्वं विपद्युपेक्षणमहितं आहितसम्प्रयोगो विप्रलम्भनगर्भः प्रश्रयश्चेति मित्रदोषाः । स्त्रीसङ्गतिर्विवादकरणमभीक्ष्णयाचनमप्रदानमर्थसम्बन्धः पुरोभाणिता पैशून्याकर्णनं च मैत्रीभेदकारणानि । नहि क्षीरात्परं महदस्ति मित्रं, यत्सङ्गतिमात्रेणैव करोति नीरमात्मसमम् । न नीरात्परं मित्रमस्ति, यन्मीलितमात्रमेव संवर्द्धयति रक्षति च व्यसनेषु स्वक्षयेण क्षीरम् । येन केनाप्युपायेन तिर्यञ्चोऽपि भवन्ति प्रत्युपकारिणोऽव्यभिचारिणश्च, न पुनः प्रायेण मनुष्याः । तथा चोपाख्यानकम् । अटव्यां किल अन्धकूपे पतितेषु कपि-

---

१ कृत्रिममाह । यदिति । वृत्तिः वर्तनं उदरभरणमित्यर्थः । जीवितं प्राणरक्षणम् । २ मित्रमुक्त्वा तद्गुणानाह । व्यसनेष्विति । व्यसनेषु सङ्कटेषु । उपस्थान रक्षणार्थं आगमनम् । अविकल्पः कपटराहित्यम् । अप्रतिपक्षत्व अप्रतिकूलत्वम् । एते मित्रस्य गुणाः भवन्ति । ३ अथ मित्रदोषानाह । दानेनेति । दानेन अर्थदानेन । विप्रलम्भनं वचनं तद्गर्भे यस्य एतादृशः प्रश्रयः नम्रता । त एते मित्रस्य दोषा भवन्ति । ४ अधुना मैत्रीभेदस्य कारणान्याह । स्त्रीसङ्गतिरिति । अभीक्ष्ण पुनः पुनः याचनम् । पुरोभागिता दोषैकदृष्टिः । पैशून्यं तस्य निन्दादि तस्य आकर्णनम् । एतानि मैत्रीभेदस्य कारणानि भवन्ति । ५ उत्तमाया मैत्र्या निदर्शनमाह । नहीति । यथा क्षीर नीरेण सङ्गतं सत् नीरमात्मसमं करोति । तथा उत्तमेन मित्रेण भाव्यमित्यर्थः । ६ नीरमपि क्षीरस्य मित्रमित्याह । नेति । व्यसनेषु अग्नितापनादिषु । दुग्धमधिश्रितं चेत् नीरमेव शुष्यति न दुग्धम् । स्वक्षयेणापि मित्रं रक्षणीयमित्यर्थः । ७ उपकर्तृषु प्रत्युपकारकरणमतीव दुर्लभमित्याह । येन केनेति । तिर्यञ्च. पश्वादयः । अव्यभिचारिणः अप्रतीपाश्च भवन्ति न तु मनुष्याः । अत उपकारोऽपि विचार्यैव कर्तव्य. ।

सर्प-सिंहाक्षशालिकेषु कृतोपकारः काङ्कायननामा कश्चित्पान्थः विशालायां पुरि तस्मादाक्षशालिकाद्व्यापादनमवाप, नाडीजङ्घश्च गौतमादिति ।[1]

## इति मित्रसमुद्देशः ॥ २३ ॥

—०:०—

राज्ञि रक्षिते सर्वं रक्षितं भवत्येव, अतः स्वेभ्यः परेभ्यश्च नित्यं राजा रक्षितव्यः ।[2] अत एवोक्तं नयविद्भिः । "पितृपैतामहसम्बन्धानुबद्धं शिक्षितमनुरक्तं कृतकर्माणं च जनमासन्नं कुर्वीत । नान्यदेशीयमकृतार्थमानं स्वदेशीयं वा अपकृत्योपगृहीतं"[3] इति ।

---

१ उक्तमर्थमाख्यानेन साधयति । तथेति । उपाख्यानकं ऐतिह्यम् । आख्यान चेत्थम् । कस्मिंश्चित्प्रदेशे केनचिद्दुष्टेन तृणादिभिः पिहितमुखेऽन्धकूपे यदृच्छया दैवचोदिताः कपि-सर्प-सिंहाक्षशालिकाः पतयाम्बभूवुः । अक्षशालिको द्यूतकरः । एवमन्धकूपे विपद्यमानास्ते काङ्कायननाम्ना केनचिद्दयालुना पान्थेन तस्मादन्धकूपाद्बहिर्निष्कासिताः । तेषु च कपि-सर्प-सिंहास्त्रयस्तिर्यञ्चः तस्मा उपकर्त्रे काङ्कायनाय स्वात्मसमर्पणं कृत्वा तेनानुज्ञाता यथेष्ट देशं जग्मुः । मानवोऽक्षशालिकस्तु कपटोक्तिशतैस्तं तोषयित्वा तस्य मित्रत्वमापन्नः तेन सह नगरग्रामादिषु पर्यटन् तस्य धनमपजिहीर्षुः विशालायां पुरि शून्ये देवालये शयानं तं रात्रौ जघानेति श्रूयते । तथैव नाडीजङ्घनामा कश्चन उपकर्तापि गौतमान्मरणमवापेति बहून्याख्यानानि श्रूयन्ते ।

---

२ अथ राजरक्षितसमुद्देशं विवक्षुः आदौ राज्ञो रक्षणे विशेषमाह । राज्ञीति । स्वेभ्यः दायादेभ्यः । परेभ्यः शत्रुभ्यः । ३ पितृपैतामहेति । वंशपरम्परया सेवासम्बन्धेन अनुबद्धम् । तत्रापि सुशिक्षितं कृतविद्यं अनुरक्तं च स्वशरीररक्षकं कुर्यात् । राजेति शेषः । उक्तलक्षणमपि पुरुषं स्वदेशीयमेव तस्मिन्कर्मणि योजयेत् नान्यदेशीयमित्याह । अर्थदानादिना कृतमानोऽन्यदेशीयोऽपि कर्तव्य इत्याह । पूर्वमपकारं कृत्वा पश्चादुपगृहीतं स्वदेशीयमपि वर्जयेदित्याह ।

चित्तविकृतेर्नास्त्यविषयः[1] । किं न भवति मातापि राक्षसी[2] ? । अस्वामिकाः प्रकृतयः समृद्धा अपि निस्तरितुं न शक्नुवन्ति[3] । गतायुषि सकलाङ्गेऽपि देहिनि किं करोति धन्वन्तरिरपि वैद्यः[4] । राज्ञस्तावदासन्नाः स्त्रियः, आसन्नतरा दायादाः, आसन्नतमाश्च पुत्राः[5] । ततो राज्ञः प्रथमं स्त्रीभ्यो रक्षणम्, ततो दायादेभ्यः, ततश्च पुत्रेभ्यः । आङ्कनङ्गादाचाक्रवर्तिनः सर्वोऽपि स्त्रीसुखाय क्लिश्यति[6] । निवृत्तस्त्रीसुखस्य धनपरिग्रहो मृतमण्डनमिव[7] । सर्वाः स्त्रियः प्रायेण क्षीरोदधिवेलायामिव प्रायेण विषामृतस्थानम्[8] । मकरदंष्ट्रा इव स्त्रियः स्वभावादेव वक्रशीलाः[9] । अतः स्त्रीणां वशोपायो देवानामपि दुर्लभः[10] । कलत्रं रूपवत्सुभगमनवद्या-

---

१ तस्य हेतुमाह । चित्तेति । चित्तविकृतेः कोऽपि अविषयो नास्ति अपि तु सर्वोऽपि विषय एव । विकृतचित्तः पुमान् किं किं न कुर्यात्? इति भावः । २ अत्र दृष्टान्तमाह । किमिति । निरतिशयवात्सल्यवती मातापि स्वपुत्रे कदाचित् राक्षसी भवति राक्षसीवत् तमेव नाशयतीत्यर्थः । ३ अस्वामिकाः राजरहिताः । निस्तरितु न शक्नुवन्ति । आपदामिति शेषः । अतः स्वामिरेव मुख्यः । ४ अत्र निदर्शनमाह । गतायुषीति । यतो आयुरेव मुख्यं अतस्तदभावे धन्वन्तरिसदृशो ऽतिनिपुणोऽपि वैद्यः किं करोति? न किमपि । अतः सर्वावस्थासु प्रथमं स्वामिरक्षणमेव कर्तव्यमित्यर्थः । ५ स्वामिरक्षणप्रकारमाह । राज्ञ इति । तरप्-तमपौ विशेषं दर्शयतः । ६ यतः प्रथमं स्त्रिय एव राज्ञः आसन्नाः अतः ताभ्य एव राजा रक्षितव्यः । ततो ऽन्येभ्यः । ६ प्लवङ्गो वानरः क्लिश्नाति क्लेशमुपभुङ्क्ते । ७ स्त्रीसुखार्थमेव धनपरिग्रहः । यस्य तन्नास्ति तस्य धनसङ्ग्रहः मृतस्य मण्डनमिव निष्फल इत्यर्थः । ८ अथ स्त्रीणां स्वभावमाह । सर्वा इति । यथा क्षीरसमुद्रस्य वेला विषस्य अमृतस्य च स्थानं तथा सर्वाः स्त्रियः क्रौर्यस्य मार्दवस्य च स्थानम् । द्वयमपि तासु वर्तत एवेत्यर्थः । ९ मकरस्य दंष्ट्रा यथा स्वभावत एव वक्रा तथा स्त्रीणां शीलं स्वभावत एव वक्रं इत्यर्थः । १० स्त्रियो वक्रशीलाः अतस्तासां वशीकरणं दुष्करमित्यर्थः ।

वीरमपत्यवदिति महतः पुण्यस्य फलम् । कामदेवासक्तस्याना हि स्त्रीणां न रक्षणम् । किन्तु परपुरुषादर्शनं सम्भोगः सर्वसाधारणता च पत्युर्दानम् । दर्शनालापाभ्यां हि समवृत्तौ पुंसि स्त्रियो नापराध्यन्ति । भवन्ति च कामधेनैव इवानतीषितवस्तुतया । परपरिगृहीतासु स्त्रीषु प्रियाप्रियत्वं न मन्येत । कारणवशान्निम्बो ऽपि अनुभूयत एव । चतुर्थदिवसस्नाता स्त्री तीर्थम् । तीर्थापरोधो हि महानधर्मः । ऋतावपि स्त्रियमुपेक्ष्यमाणः पितृणामृणभाजनं स्त्रीदूषकश्च भवति । अपराद्धा हि स्त्रियः स्वयं नश्यन्ति, विनाशयन्ति वा पतिम् । न स्त्रीणामकर्तव्ये मर्यादास्ति । वरमविवाहो नोढानामुपेक्षणम् । अकर्षतः किं क्षेत्रेण ? । सपत्नीविधानं पत्युरसमञ्जसत्वं विमाननमपत्याभावाश्चिरविरहश्च स्त्रीणां विरक्तिकारणानि । न स्त्रीणां सहजो गुणो दोषो

---

१ कामदेवस्य आसङ्गः शरासनं तद्वशं प्राप्तानां स्त्रीणां न रक्षणं भवतीत्यर्थः । २ परपुरुषदर्शनादिभ्यः प्रथमं स्त्रियो रक्ष्या. । २ समवृत्तौ समानशीले पत्यौ । ३ कामधेनव इव मनोरथपूरणकर्त्र्यो भवन्तीत्याह । ४ स्वस्त्रीं विहाय परस्त्रीषु प्रीतिः न कार्येत्याह । परेति । ५ कदाचित् तासां स्वीकारे निम्बसदृश एव तत्परिग्रहः कर्तव्य इत्याह । ६ तीर्थं पवित्रमित्यर्थः । ७ तीर्थस्य अपराधः द्वेषादिना अगमनं महान् अधर्मः । ८ रजोदर्शनात् षोडशदिनपर्यंत ऋतुकालः तस्मिन्नपि स्त्रियमगच्छतः पितृऋणापाकरणाभाव इत्यर्थः । यथाह मनुः—

"ऋतुस्नातां तु यो भार्यां गृहे तिष्ठन्न गच्छति ।
घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः" ॥

९ अपराद्धाः स्त्रियोऽतिक्रूरा भवन्ति अतः तासां अपराधप्रयोजकं कर्म न कर्तव्यमित्याह । अपराद्धेति । स्वयं नश्यन्ति पतिमपि नाशयन्ति । १० तादृशानां स्त्रीणां अकर्तव्ये मर्यादैव नास्तीत्याह । ११ ऊढानां विवाहितानाम् । १२ गमनमकर्तुः अकर्षतः क्षेत्रेणेव स्त्रियापि किं कार्यम् ? । १३ अथ स्त्रीणां विरक्तिकारणान्याह । सपत्नीति । १४ स्त्रीणां न कोऽपि सहजो दोष इत्याह । स्त्रीणामिति ।

वास्ति । किन्तु नद्यः समुद्रमेवं यादृशं पतिं प्राप्नुवन्ति तादृश्यो भवन्ति । स्त्रीणां दौत्यं स्त्रिय एव कुर्युः । तैरश्चोऽपि पुंयोगः स्त्रियं दूषयति, किं पुनर्मानुष्यः । वंशशुद्ध्यर्थं अनर्थपरिहारार्थं आत्मलोकाविनाशार्थं च यत्नेन स्त्रियो रक्ष्यन्ते, नोपभोगार्थम् । यथाकामं कामिनीनां वे[5]श्यानां सङ्ग्रहः । परम[6]नर्थवानकल्याणावहः प्रक्रमश्च । अ[7]दौवारिके द्वारि को नाम न प्रविशति । भोजनभाजनवत्सर्वसामान्याः पण्याङ्गनाः । कस्तासु हर्षामर्षयोरवसरः? । मात्राभिजनाविशुद्धा राज्ञो उद्वासितोपस्थायिन्यः स्त्रियः सम्भोक्तव्याः । दर्दुरस्य सर्पबिलप्रवेश इव स्त्रीगृहप्रवेशो महीपतीनाम् । न स्त्रीगृहा[12]दापद्यापि किञ्चित्स्वयमनुभवनीयम् । नापि स्वयमनुभवनीयेषु स्त्रियो नियोक्तव्याः । संवननस्वातन्त्र्यं चाभिलषन्त्यः स्त्रि[14]यः किं नाम न कुर्युः । श्रूयते हि । आत्मनः किल-स्वच्छन्दवृत्ति-

---

१ पतिसदृशस्तासां स्वभावो भवतीत्याह । २ अथ स्त्रीणां दौत्यं केन कर्तव्य तदाह । ३ पुरुषमात्रसयोगात् स्त्रियो रक्षणीया इत्याह । तैरश्च इति । तैरश्चः पश्वादिसम्बन्धी यस्य पुरुषस्य संयोगः स्त्रियं दूषयति, किं पुनर्मनुष्य सम्बन्धी ? । ४ स्त्रीरक्षणे वंशशुद्ध्यादीनि त्रीणि कारणान्याह । वंशशुद्ध्यर्थमिति । ५ कामी चेत् कामयमानां वेश्यां सङ्गृहीतेत्याह । यथेति । ६ इदं वेश्यासङ्ग्रहणं श्येन वदनुज्ञातम् । वस्तुतस्त्वेतदनर्थावहमेवेत्याह । परमित्यादि । ७ दौवारिको द्वारपालः । ८ पण्याङ्गना वेश्याः । ९ वेश्यासु न हर्षामर्षावित्याह । १० राज्ञः उद्वासितं द्वारं तत्रोपस्थायिन्यः नृत्याद्यर्थम् । एतादृशा वेश्याः सङ्गृहीतव्या. नान्याः । ११ राज्ञा वेश्यादिस्त्रीणां गृहे कदापि प्रवेशो न कर्तव्य इत्याह । दर्दुरस्येति । मण्डूकस्य सर्पबिले प्रवेश इव राज्ञः तत्र प्रवेशो नाशाय भवतीत्याह । १२ स्त्रीगृहादानीतं किञ्चिदपि वस्तु स्वयं नानुभवनीयमित्याह । नेति । १३ स्वयमनुभवनीयेषु पदार्थेषु स्त्रियो न नियोक्तव्या इत्याह । नापीति । १४ तस्य हेतुमाह । संवननं रक्षणम् । स्वातन्त्र्याभिलाषिण्यः स्त्रियः सर्वमप्यकार्यं कर्तुं प्रभवन्ति ।

मिच्छन्ती विषदूषितमद्यगण्डुषेण मणिकुण्डला महादेवी यवनेषु निजराज्यार्थं अजराजानं, अलक्तकदिग्धेनाधरेण वसन्तमतिः शूरसेनेषु, सुरतविलासं विषोपलिप्तेन मेखलामणिना वृकोदरी दशार्णेषु, मदनार्णवं निशित नेमिना मुकुरेण मदिराक्षी, मगधेषु मन्मथविनोदं कबरीनिगूढेनासिपत्रेण, चण्डरसा पाण्ड्येषु मुण्डीरमिति । अमृत-सुरावाप्य इव क्रीडासुखोपकरणं स्त्रियः । कस्तासां कार्याकार्यविलोकनेऽधिकारः । अपत्यपोषणे गृहकर्मणि शरीरसंस्कारे भर्तुः शयनावसरे वा स्त्रीणां स्वातन्त्र्यं, नान्यत्र । अतिप्रसक्तं हि स्त्रीषु स्वातन्त्र्यं करपत्रमिव भर्तुर्नाविदार्य हृदयं विश्राम्यति । स्त्रीवशः पुरुषः सरित्प्रवाहपतितपादप इव न चिरं नन्दति । पुरुषमुष्टिस्था स्त्री खड्गयष्टिरिव कमुत्सवं न जनयति । नातीव स्त्रियो व्युत्पादनीयाः । स्वभावसुभगोऽपि शास्त्रोपदेशः स्त्रीषु शस्त्रीषु पयोलव इवनक विषयं प्रतिपद्यते । वेश्यासक्तिः प्राणार्थ-मानहानिं कस्य न क-

---

१ उक्तार्थे एतेन्यानि प्रमाणयति । श्रूयते इति । मणिकुण्डला नाम्नी महादेवी स्वपतिमजराजानं विषदूषितेन मद्यगण्डूषेण नाशितवती । वृकोदरी दशार्णेषु देशेषु विषोपलिप्तेन मखलामणिना सुरतविलासे सदनार्णवनामानं जघान । २ अमृतस्य सुरायाश्च वाप्यः । ३ अथ केषु कार्येषु स्त्रीणां स्वातन्त्र्यं ? तदाह । अपत्यपोषणे इति । ४ करपत्रं असिः । स यथाहृदयप्रविष्टः हृदयं विदार्य विनिर्याति तथा अतिप्रसक्तं स्त्रीणां स्वातन्त्र्यं भर्तुः हृदयं विदारयति । ५ नदीप्रवाहे पतितपादप इव शनैः शनैः नश्यतीत्यर्थः । ५ पुरुषमुष्टिस्था पुरुषाधीना । ६ न अतीव व्युत्पादनीयाः व्युत्पत्तिं शास्त्रीं लौकिकीं वा अध्यापनीयाः । ७ ननु शास्त्रोपदेशात् बुद्धिवैशद्यं लभेत तत्कुतो निवार्यते इति चेत्तत्राह । स्वभावेति । शास्त्रोपदेशः स्वभावत एव सुभगः तथापि स्त्रीषु शस्त्रीषु च वैषम्यं प्राप्नोति ।

रोति। धनमनुभवन्ति वेश्याः, न पुनर्मनुष्यम्। धनहीने कामदेवेऽपि न प्रीतिं बध्नन्ति वेश्याः। स पुमान्न भवति सुखी, यस्य अतिशयं वेश्यासु दानम्। स पशोरपि पशुः, स्वधनेन यः परेषामर्थवती करोती वेश्याम्। आनाविश्रान्तेर्वेश्यापरिग्रहः श्रेयान्। अध्रुवेणाधिकेनैाप्यर्थेन वेश्यामनुभवन्पुरुषो न चिरमनुभवति सुखम्। विसर्जनाकारणाभ्यां तदनुभवे महानर्थः। सुरक्षितापि वेश्यां न स्वां प्रकृतिं परपुरुषसेवनलक्षणां त्यजति। लोभोपहताऽसती परपुरुषान्भजते। या यस्य प्रकृतिः सा तस्य देवैरप्यपनेतुं न शक्यते। सुभोजितोऽपि श्वा किमस्थीनशुचीनाहारान् परिहरति?। क्षीराश्रितशर्करापानभोजितश्चाहिर्न कदाचित्परित्यजति विषम्। न खलु कपिः शिक्षाशतेनापि चापल्यं त्यजति। इक्षुरसेनापि सिक्तो निम्बः कटुरेव। सन्मानादवसादो कुल्यानामपग्रहहेतुः। तन्त्रकोशावर्द्धिनी वृत्तिर्दायादान्विकारयति। तारुण्यमधिकृत्य संस्कारसाराहितोपयागाच्च शरीरस्य रमणीयत्वं, न पुनः स्वभावः। भक्ति-विश्रम्भादेशाव्यभिचारिणं कुल्यं वा पुत्रं वा संवर्द्धयेत्। विनियुञ्जीत तथोचितेषु कर्मसु। भर्तुरादेशं न विकल्पयेदन्यत्र प्राणबाधाबहुजन-

---

१ प्राणाश्च अर्थश्च मानश्च तेषां हानिं नाशम्। वेश्यास्तु धनमेवानुभवन्ति न पुनः पुरुषम्। २ अर्थवतीं धनसम्पन्नाम्। ३ यतोऽधिके नाप्यर्थेन वेश्यामनुभवन् पुरुषः चिरं सुखं नानुभवति तत्कुतो ऽल्पेनार्थेन?। ४ प्रकृतिं स्वभावम्। ५ अत्र शुनो दृष्टान्तः। ६ दृष्टान्तान्तरमाह। क्षीराश्रितेति। ७ शिक्षणशतेनेत्यर्थः। ८ तन्त्रस्य कोशस्य च अवर्द्धिनी अधिकेत्यर्थः। ९ भक्तिः स्वस्मिन् विश्रम्भो विश्वासः आदेशो आज्ञा। कुल्यं दायादवर्जमाप्तम्। १० न विकल्पयेत् नातिक्रामेत्। अस्यापवादमाह। स्वस्य प्राणबाधा बहुजनानां विरोधः पातकं च। एतेष्वन्यतमस्य प्राप्तौ सत्यां कदाचित् भर्तुरप्याज्ञां अतिक्रामेत्।

विरोधपातकेभ्यः । बलवत्पक्षपरिग्रहेषु दायिष्वाप्तपुरुषपुरस्सरो विश्वासो वशीकरणं गूढपुरुषनिक्षेपः प्रणिधिर्वा । दुर्बुद्धौ सुते दायिनि वा सम्यग्युक्तिभिर्दुरभिनिवेशमुत्तारयेत् । साधूपचर्यमाणेषु विकृतिभाजनं स्वहस्तादाकर्षणमिव । क्षेत्र-बीजयोर्वैकृत्यमपत्यानि विकारयति । कुलविशुद्धिरुभयप्रीतिर्मनःप्रसादोऽनुपहतो समयश्च श्री-सरस्वत्यावाहनमन्त्रपूतपरमान्नोपयोगश्च गर्भाधाने पुरुषोत्तममवतारयति । गर्भशर्म-जन्मकर्मचापत्येषु देहलाभात्मलाभयोः परमं कारणम् । स्वजातियोग्यसंस्कारहीनानां राज्ये प्रव्रज्यायां च नास्त्यधिकारः । असति योग्येऽन्यस्मिन्नङ्गहीनोऽपि पितृपदमर्हत्यापुत्रोत्पत्तेः । साधुसम्पातो हि राजपुत्राणां विजयो नयमभ्युदयं च न दूषयति । घुणजग्धं काष्ठमिवाविनीतं राजपुत्रं राज्यमभियुक्तमात्रं भज्येत् । आप्तविद्यावृद्धोपनिबद्धाः सुखोपरुद्धाश्च राजपुत्राः स्वपितरौ मनसाप्यवमन्यमानेष्वभिमुखाः श्रियो भवन्ति विमुखाः । किं तेन राज्येन, यत्र दुरपवाददोपहतं जन्म । कचिदपि कर्माणि पितुराज्ञां राजपुत्रा-

---

१ बलवान् योऽथ पक्षः तेन पुरस्कृतेषु । गूढपुरुषश्चारः तस्य निक्षेपः स्थापनम् । २ उत्तारयेत् नाशयेत् । ३ तेषामुपचरणे विकृतिकरमित्याह । साध्विति । ४ क्षेत्रं स्त्री । बीजं वीर्यम् । ५ अधुना उत्तमपुत्रजननोपायमाह । कुलेति । ६ गर्भस्य शर्म सुखम् । अथ राज्याधिकारिणमाह । स्वेति । स्वजातियोग्याः संस्कारा गर्भाधानादयः । प्रव्रज्या सन्यासः । ७ अङ्गविकलो न राज्यार्हः तथापि अन्यस्मिन् योग्ये असति पितृपैतामहं राजपदमङ्गविकलोऽप्यर्हति । परमापुत्रोत्पत्तेः । पुत्रोत्पत्तौ सत्यां तस्य नाधिकारः । ८ साधुसम्पातः सत्पुरुषसहवासः । घुणः कीटविशेषः । भज्येत् नश्येदित्यर्थः । तस्माद्विनीत एव राजपुत्रो राज्ये नियोक्तव्यः । ९ स्वपितरौ अवमन्यतः श्रीविमुखत्वं भवतीत्याह । १० दुष्टेन अपवादेन उपहतं दूषितम् ।

नोल्लङ्घयेयुः । किं खलु रामः क्रमेण विक्रमेण वा हीनो, येन पितुराज्ञया वनं विवेश । यः खलु पुत्रोऽप्यभीप्सितकर्मणि परम्पराभिर्लभ्यते स कथमुपहन्तव्यः ? । कर्तव्यमेवासुखं कर्म, यदि हन्यमानस्यं वध आत्मनो न भवेत् । ते खलु राजपुत्राः सुखिनो, येषां पितरि राज्यभारः । अलमनया श्रिया, या न किमपि सुखं जनयति । व्यासङ्गपरम्पराभिः शतशो दुःखमनुभावयति । अफलो ह्यारम्भः कस्य नामोदर्के सुखावहः । परक्षेत्रं कृषतुः कर्षयतुर्वा वृथा श्रमः, फलं पुनस्तस्यैव यस्य क्षेत्रम् । सुत-सोदर-सापत्न-पितृव्य-कुल्य-दौहित्रागन्तुकेषु पूर्वपूर्वाभावे ह्युत्तरोत्तरस्य दायव्याप्तिः । शुष्कश्यामवक्त्रता वाग्भेदः स्वेदो विजृम्भणमतिमात्रो वेपथुः मस्खलनं बाह्यविप्रेक्षणमावेगः स्वकर्मणि स्वभूमौ चानवस्थानमिति दुष्कृतं कृतवतः कुर्वतः करिष्यतो वा लिङ्गानि ।

॥ इति राजरक्षितसमुद्देशः ॥ २४ ॥

—०:०—

ब्राह्मे मुहूर्ते उत्थायेतिकर्तव्यतायां समाधिमुपेयात् । सुखनि-

---

१ क्रमेण अधिकारिक्रमेण । २ आज्ञाकरः पुत्रो राज्ञा न हन्तव्य इत्याह । य इति । ३ असुखकर्मकारी स्वयमेव नश्यतीत्याह । कर्तव्यमिति । ४ राज्यचिन्तानुपहतत्वात् सुखिनः । ५ व्यासंगः चिन्ता तस्याः परम्पराभिः । ६ उदर्के उत्तरस्मिन्काले सुखावहः । ७ दायाधिकारिण आह । सुतेति । पूर्वपूर्वस्य अभावे सत्येव उत्तरोत्तरस्य दायप्राप्तिः नान्यथा । ८ दुष्कर्मकारिणः लक्षणान्याह । शुष्केति । वाग्भेदः स्वरवैपरीत्यम् । स्वकर्माणि स्वस्थितभूमौ वा अनवस्थानं इत्यादीनि दुष्कृत कृतवतः कुर्वतः करिष्यतः च चिन्हानि भवन्ति इत्यर्थः ।

---

१ अथ दिवसानुष्ठानसमुद्देशं विवक्षुः प्रथमं प्रातः प्रबुद्धः कर्तव्यमाह । ब्राह्मेति । समाधिः चित्तस्वास्थ्यम् ।

ह्यप्रसन्ने हि मनसि प्रतिफलन्ति सर्वा बुद्धयो यथार्था वा । उदयास्तमनसन्धिषु धर्मकालातिक्रमः । आत्मवक्त्रमाज्ये दर्पणे वा निरीक्षेत । न प्रातर्वर्षधरं विकलाङ्गं रजस्वलां वा पश्येत् । सन्ध्यासु धौतमुखं जप्त्वा देवतोऽनुगृह्णाति । नित्यमदन्तधावनस्य नातिमुखशुद्धिः । न कार्यव्यासङ्गे न शारीरं कर्मोपहन्यात् । न खलु युगैरपि तरङ्गविगमात्सागरे स्नानम् । वेगव्यायाम-स्वाप-स्नान-भोजन-स्वच्छन्दवृत्तिकालान्नोपरुन्ध्यात् । शुक्र-मल-मूत्र-मरुद्वेगसंरोधोऽश्मरी-भगन्दर-गुल्मार्शसां हेतुः । गन्ध-लेपावसानं शौचमाचरेत् । बहिरागतो नानाचम्य गृहं प्रविशेत् । गो सेर्गो व्यायामो रसायनमन्यत्र क्षीणाजीर्ण-वृद्ध-वातकि-रूक्षभोजिभ्यः । शरीरायासजननी क्रिया व्यायामः । आदेहस्वेदं व्यायामकालमुशन्त्याचार्याः । शस्त्र-वाहनाभ्यासेन व्यायामं सफलयेत् । बलातिक्रमेण व्यायामः कां नाम नापदं जनयति ? । अव्यायामशीलेषु कुतोऽग्निदीपनं उत्साहो देहदार्ढ्यं च । इन्द्रियात्म-मनसां सूक्ष्मवस्था स्वापः । यथा सात्म्यं स्वापाद्भुक्तान्नपाको भवति प्रसीदन्ति चेन्द्रियाणि । सुघटितमपिहितं च भाजनं साधयत्यन्नानि । हस्त-पादमर्दनमुत्सा-

---

१ प्रातरेव समाधौ हेतुमाह । सुखेति । २ उदयसन्धिः अस्तमनसन्धिश्च धर्मकार्येष्वेव निर्वहणीयौ इत्यर्थः । ३ आज्ये एवेति धर्मशास्त्रकृतः । ४ वर्षवरः षण्ढः तम् । ५ जपकर्तारं देवता अनुगृह्णन्तीत्यर्थः । ६ शारीरं शरीररक्षकं कर्म । ७ शुक्रादीनां वेगरोधो न कर्तव्य इत्याह । शुक्रेति । ८ शौचं मृदादिना कर्तव्यम् । तच्च गन्धलेपनाशावधिकं कुर्यात् । ९ व्यायामः क्षीणादिव्यतिरेकेण रसायनकल्प इत्यर्थः । १० व्यायामलक्षणमाह । शरीरेति । ११ व्यायामावधिमाह । आदेहेति । १२ व्यायामस्य सफलतामाह । शस्त्रेति । 13 व्यायामाकरणे दोषमाह । अव्यायामेति । १४ स्वापलक्षणमाह । इन्द्रियेति । १५ सुघटितं सुष्ठुकारितम् । १६ हस्तपादादिमर्दनमाशस्त्यमाह । हस्तेति ।

हवर्द्धनमायुष्यं त्रिगुह्योरकृतकर्म कृत्वा(?) पुष्यं स्त्री गुह्ये रोमाव-हरणे दशमेऽह्निनित्यं स्नानम् । द्वितीयकंमुत्सादनं तृतीयक-मायुष्यं चतुर्थकं प्रत्यायुष्यं इत्यहीनं सेवेत । धर्मकामार्थाशु-द्ध-दुर्जनस्पर्शाः स्नानस्य कारणानि । श्रम-स्वेदालस्याविगमः स्नानस्य फलम् । जलचरस्येव तत्स्नानं, यत्र न सन्ति देव-गुरु-धर्मोपासनानि । प्रादुर्भवत्क्षुपिपासोऽभ्यंगस्नानं न कुर्यात् । आतपर्ततस्य जलावगाहो दृङ्मान्द्यं शिरोभितापं च करोति । बुभुक्षाकालो भोजनकालः । अक्षुधितेनामृतमप्युपभुक्तं विषं भवति । जठराग्निं वज्राग्निं कुर्वन्भोजनादौ सदैव वज्रकं वलयेत् । निरन्नस्य सर्वं द्रवंद्रव्यमग्निर्नाशयति । अतिश्रम-पिपासोपशान्तौ पेयापः कारणं परमास्थितातधरोत्तरं भुञ्जा-नोऽग्निं दृष्टिं च लभते । सकृद्भूरिनीरोपयोगो वन्हिमवसाद-यति । क्षुत्कालातिक्रमादन्नद्वेषो देहसादश्च भवति । विध-मितेऽग्नौ किन्नामेन्धनं कुर्यात्? । योमितं भुङ्क्ते स बहु भुङ्क्ते ।

---

१ स्नानस्य पक्षान्तराणि तत्फलं चाह । स्नानमिति । २ स्नानस्य कार-णान्याह । धर्मकामेति । ३ स्नानस्य फलमाह । श्रमेति । ४ यत्र स्नान-स्य कारणभूतानि देव-गुरु-धर्मोपासनानि न सन्ति तज्जलचरस्येव स्नानम् वृथेत्यर्थः । ५ प्रादुर्भवन्त्यौ क्षुत्पिपासे यस्य तादृशः । ६ जलावगाहः जला-शयावगाह इत्यर्थः । ७ स्नानानन्तरं भोजनमाह । तत्र भोजनस्य न ताव-त्कालनियमः यस्मिन्काले बुभुक्षा भोक्तुमिच्छा भवति तस्मिन्काले भुञ्जीते-त्यर्थः । ८ यस्मात् अक्षुधितेन अमृतमप्यशितं विष भवति, तस्माद् क्षुधा विना न भोक्तव्यमिति भावः । १० वज्राग्निवत् प्रदीप्तमग्निमित्यर्थः । ११ द्रवद्रव्यं रसमित्यर्थः । १२ अग्निं अभिप्रदीप्तिं लभते । १३ एकवार बहुज-लपानं अग्निमांद्यं करोति । १४ देहसादः देहमान्द्यम् । १५ विधमिते प्र-दीप्ते ।

प्रभूतमेसुखं विरुद्धमपरीक्षितमसाधुपाकं अतीतरसमकालं चान्नं नानुभवेत् । फल्गुभुंजमननुकूलं क्षुधितमतिक्रूरं च न भुक्ति-समये सन्निधापयेत् । गृहीतग्रासेषु सहभोजिषु आत्मनः परि-वेषयेत् । तथा भुञ्जीत, यथा सायमन्येद्युश्च न विपद्येत व-न्हिः । न भुक्तिपरिमाणे सिद्धान्तोऽस्ति । वन्ह्यभिलापाय-त्तं च भोजनम् । अतिमात्रभोजी देहमग्निं च विधुरयति । दीप्तो वान्हिर्लघुभोजनाद्बलं क्षपयति । अत्यशितुर्दुःखेनान्नपरिणामः । श्र-मार्तस्य पानं भोजनं च ज्वराय । छर्दिषेवनजिघत्सुर्न प्रश्नोतुमिच्छु-र्नासमञ्जसमनाः न वापनीपः(?)पिपासोद्रिक्तमश्नीयात् । भुक्त्वा व्यवायं-व्यायामौ सद्यो विपत्तिकारणम् । आजन्मसात्म्येन विष-मपि सेव्यं पथ्यम् । असात्म्यमपि पथ्यं सेवेत, न पुनः सात्म्यम-प्यपथ्यम् । सर्वं बलवतः पथ्यमिति मत्वा न कालकूटं खादेत् । सुशिक्षितोऽपि विषतन्त्रज्ञो म्रियत एव कदाचिद्विषात् । संवे-

---

१ कीदृशमन्नं न भोक्तव्यं तदाह । प्रभूतमिति । प्रभूतं विपुलम् । अपरीक्षित विषादिदूषितं न वेति अशोधितम् । गतरम चान्नं नाश्नीयादित्यर्थ. । २ फल्गु अल्पं भुञ्जते ऽसौ फल्गुभुक तम् । न सन्निधापयेत सन्निधौ न स्थापयेत । ३ आत्मन पात्रमिति शेष. । ४ न विपद्येत न मन्दो भवेत् इत्यर्थः । ५ भुक्तिपरिमाणे एतावदन्नं भोक्तव्यमिति परिमाणे न नियम । वन्ह्यभिलाषायत्त क्षुधायत्त भोजन इति सामान्यो नियम. । ६ अतिमात्रभोजी अतिरिक्तभोजी । विधुरयति क्षीणयति । ७ अतिरिक्तभोजनवदत्यल्पभोजनमपि अहितकरमित्याह । दीप्त इति । लघुभोजनमल्पाहार. । ८ परिणाम. परिपाकः । ९ छर्दि वमनम् । असमञ्जसमनाः अस्वस्थचित्त. । १० भुक्त्वा सद्य. व्यवाय: व्यायामश्च न कार्य । ११ आजन्मसात्म्येन जन्माभ्यासेन पथ्य चेद विषमपि सेवनीयम् । १२ पथ्यमनभ्यस्तमपि सेवेत नापथ्यमभ्यस्तमपि । १३ विषतन्त्रज्ञः विषशोधनाद्यभिज्ञ: ।

भज्यागतेष्वतिथिष्वाश्रितेषु च स्वयमाहरेत् । देवं गुरुं धर्मं चोपचरन्नाकुलमतिः स्यात् । व्याक्षेपभूमनोनिरोधो मन्दयति सर्वाण्यपीन्द्रियाणि । स्वच्छन्दवृत्तिः पुरुषाणां परमं रसायनम् । यथाकामसमीहाः किल काननेषु करिणो न भवन्त्यास्पदं व्याधीनाम् । सततं सेव्यमानो द्वे एव वस्तुनी सुखाय, सरसः स्वैरालापः ताम्बूलभक्षणं चेति । चिरमूर्ध्वस्थो जरयति रसवाहिनीः स्नसाः । सततमुपविष्टो जठरमाध्यापयति प्रतिपद्यते च तुन्दिलतां वाचि मनसि शरीरे वा । अतिमात्रं स्वेदः पुरुषमकालेऽपि जरया योजयति । नादेवं देहं प्रासादं कुर्यात् । देव-गुरु-धर्मरहिते पुंसि नास्ति संप्रत्ययः । क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषो देवः । तस्यैवैतानि खलु विशेषनामानि । अर्हन्नजोऽनन्तः शम्भुर्बुद्धस्तमोन्तक इति । आत्मसुखानवरोधेन कार्याय नक्तमहश्च विभजेत् । कालानियमेन कार्यानुष्ठानं मरणसमम् । आत्यन्तिके कार्ये नास्त्यपरो धर्मस्य । अवश्यकर्तव्ये कालं न यापयेत् । आत्म-

---

१ अन्नस्य संविभागः कर्तव्य इत्याह । संविभज्येत्यादिना । आगतेषु अतिथिषु सेवकादिषु च अन्नविभागं कृत्वा स्वयं भुञ्जीयात् । २ आकुलमतिः भ्रान्तबुद्धिः । ३ मन्दयति ग्लानानि करोति । ४ स्वच्छन्दवृत्तिः पारतन्त्र्याभावः । न तु स्वैरवृत्तिः । ५ यथाकामसमीहाः स्वेच्छाचारिणः । ६ सरसस्वैरालापः । न तु नीरसः । ७ चिरमूर्ध्वस्थः उर्ध्वप्रदेशे खट्वादौ तिष्ठति यः स रसवाहिनीः धमनीः । ८ एवं सततमुपविष्टोऽपि तुन्दिलतामापद्यते । ९ स्वेद मानस दुःखम् । अकाले तारुण्ये ऽपि । १० प्रासादो गृहं, तदेव देवरहितं न कुर्यात् । ११ सम्प्रत्ययो विश्वासः । १२ देवलक्षणमाह । क्लेशेति । नैयायिकानां वैशेषिकाणां च सम्मतमिदं लक्षणम् । १३ अर्हन् इत्यादिनि तत्तद्धर्मानुसारेण विशेषनामान्येव भिन्नानि न तु देवेऽस्ति कश्चन भेदः । १४ शरीरस्य अन्तरायमकृत्वा दिवानक्तं कार्याणि कुर्यात् । १५ न कालानियमेन कार्याणि कुर्यादित्याह । १६ कार्येष्वात्यन्तिकेषु धर्म एव मुख्यः नान्यः कश्चन ।

रक्षायां कदापि न प्रमाद्येत । सवत्सां धेनुं प्रदक्षिणीकृत्य ध-र्मासनं[1] यायात् । अनधिकृताऽमन्त्रि[2]तस्तु न राजसभां प्रविशेत् । आराध्यं[3] समुत्थायाभिवादयेत् । देव-गुरु-धर्मकार्याणि स्वयं[4] पश्येत् । कुहकाभिचारकर्मकारिभिः सह न सङ्गच्छेत् । प्राण्युपघातेन कामपि क्रीडां न प्रवर्तयेत्[5] । जनन्यापि परस्त्रिया सह रहसि[6] न तिष्ठेत् । नातिक्रुद्धोऽपि मान्यम्[7]अतिक्रामेदवमन्येत वा । नाशोधितं[8] परस्थानमुपविशेदुपेयाद्वा । नात्मजनैरनारूढं वाहनम्[9]अध्यासीत । नस्वैरपरीक्षितं तीर्थं सार्थं[10] तपस्विनं वा ऽभिगच्छेत् । नैयाष्टिकैरविविक्तं[11] मार्गं भजेत् । न विषापहारौषधिमणीन्क्षणम्[12]अप्युपासीत । सदैव जाङ्गुलिकीं[13] विद्यां कण्ठे न धारयेत् । मन्त्रि-भिषग्नैमित्तिक[14]रहितो न कदाचिदपि प्रतिष्ठेत् । वन्ह्यावन्यचक्षुषि[15] च भोज्यमुपभोग्यं परीक्षयेत् । अमृते[16] मरुति विज्ञाते सति सर्वदा चेष्टेत कृत्यानि सर्वाणि । भुक्ति-सुरत-समरार्थी दक्षिणे मरुति[17] स्यात् । परमात्मना समीकुर्वन् कस्यापि भवति द्वेष्य[18]मनः । परिजन-दिन-

---

१ राजेति शेषः । २ अनधिकृतो न कस्मिन्नप्यधिकारे नियुक्तः अनामन्त्रितश्च । ३ आराध्यं पूज्यं गुर्वादिकं चेत्यर्थः । ४ राजेति शेषः । कुहकः कपट आभिचारिकः जारण-मारणादिकृत् । ५ भूतध्रुक् न भूयादित्यर्थः । ६ रहस्येव नान्यत्र । इन्द्रियाणामनधीनत्वात् । ७ मान्यं गुर्वादिम् । ८ अशोधित स्वपुरुषैः विविच्य न दृष्टम् । ९ वाहनं रथादि । प्रथमं आत्मजनमारोहयित्वा अनन्तरं स्वयं अध्यासीत । १० सार्थं वणिजम् । ११ अविविक्तं अशोधितम् । १२ विषनाशकान्मण्यादीन् । १३ जाङ्गुलिको विषवैद्यः तस्य विद्यां अभ्यस्येत् परं सर्वदा न कण्ठे कुर्यात् । १४ नैमित्तिको ज्योतिषज्ञः । १५ स्वयमुपभोग्यं वस्तु वन्ही दाहादिना अन्य चक्षुषि च परीक्षेत् । १६ अमृतसिद्धियोगे सर्वाणि कार्याणि कुर्यात् । १७ दक्षिणे दक्षिणदिक्स्थे मरुति वायौ । १८ परं शत्रुम् ।

शकुन-पवनानुलोम्यं भविष्यन्त्योः कार्यसिद्धेर्लिङ्गम् । नैको नक्तं दिवा वा ऽऽहिण्डेत् । नियमितमनोवाक्कायः प्रतिष्ठेत् । अहनि सन्ध्यामुपासीताऽऽनक्षत्रदर्शनाच्च । ततः "पयोधिपयोधरां धर्म-वत्सवतीं उत्साहवालधिं वर्णाश्रमकर्णां नय-प्रतापविषाणां सत्य-शौचचक्षुषीं न्यायमार्गाभिमुखीं अहमिमां गां गोपयामि, अतस्त-महं मनसापि न सहेयं, योऽपराध्येदेतस्यै" इति इमं मन्त्र स-माधिंस्थितो जपेत् । कोकवद्दिवाऽकामो निशि भुञ्जीत । च-कोरवन्नक्तंकामः दिवापक्वम् । पारावतकामो वृष्यान्नयोगा-नाचरेत् । बष्कयणीनां सुरभीणां पयःसिद्धं माषदलपरमान्नं परो योगः स्मरसंवर्द्धने । नावृष्यन्तीं स्त्रियमभियायात् । उत्तरः प्रवर्षवान्देशः । परमरहस्यमनुरागे प्रथमप्रकृतीनाम् । द्वितीय-प्रकृतिः सशाद्वलमृदुपवनप्रदेशः । तृतीयप्रकृतिः सुरतो-त्सवाय स्यात् । धर्मार्थस्थाने लिङ्गोत्सवं लभते । स्त्रीपुरुषाणां स्त्रीपुंसयोर्न समायोगात्परमं वशीकरणमस्ति । प्रकृतिरुपदेशः

---

१ परिजनः सेवकजनः । आनुलोम्यं आनुकूल्यम् । लिङ्गम् चिन्हम् । प्रतिष्ठेत् प्रस्थानं कुर्यात् । २ समाधौ जप्यं मंत्रमाह । पयोधिति । पयोधयः समुद्रा एव पयोधरास्तना यस्याः । धर्म एव वत्सो यस्याः । वालधिः पुच्छ-म् । गां पृथ्वीरूपिणीं गात्रम् । ३ कोकः चक्रवाकः । ४ वृष्या वीर्यवर्धका अन्नस्य योगाः तान् आचरेत् सेवेत । ५ तानेवाह । बष्कयणीति । बष्कयणी स-कृत् प्रसूता गौः । परमान्नं पायसम् । ६ अवृष्यन्तीं पुरुषसङ्गमनिच्छन्तीं तां न गच्छेत् । ७ अथ स्त्रीणां प्रियं पुरुषमाह । परमेति । तत्र तावत् काम-शास्त्रानुसारेण वृष-शश-अश्वाभिधाः तिस्रः प्रकृतयो भवन्ति पुरुषाणाम् । तासु प्रथमप्रकृतिः वृष इत्यर्थः । तादृशः पुरुषः स्त्रीणां पद्मिनीनां विशेषानु-रागे कारणं भवति । ८ द्वितीयप्रकृतिः शश इत्यर्थः स सशाद्वलमृदुपवनप्रदे-शवत्सुखसेव्यः स्त्रीणाम् । ९ तृतीयप्रकृतिरश्वः स वीर्यवत्तरत्वात् सुरतोत्स-वाय कारणं भवति । १० वैदग्ध्यं नैपुण्यम् ।

स्वाभाविकं च प्रयोगवैदग्ध्यमिति समसमायोगकारणानि । [1]क्षुत्तर्षपुरीषाभिष्यन्दार्तस्याभिगमो नापत्यमनवद्यं करोति । न [2]सन्ध्यासु न दिवा नाप्सु न देवतायतने मैथुनं कुर्यात् । पर्वसन्धौ सोपद्रुते चाहनि कुलस्त्रियं नोपसेवेत । [3]नापवादेदेतत् । न [4]तद्गृहाभिगमनेन कामपि स्त्रियमधिशयीत । [5]वंश-वयो-वृत्त-विद्या-विभवानुरूपो वेषः समाचारो वा कं न विडम्बयति । अपरीक्षित मशोधितं च [6]राजकुले न किञ्चन प्रवेशयेन्निर्यासयेद्वा । [7]श्रूयते हि स्त्रीवेषधारी कुन्तलाधिपतिप्रयुक्तो गूढपुरुषः कर्णनिहितेनासिपत्रेण पल्हवनरेन्द्रं, हयपतिश्च मेषविषाणनिहितेन विषेण कुशस्थलेश्वरं जघानेति । [8]सर्वत्राविश्वस्ते नास्ति काचित्क्रिया ।

## इति दिवसानुष्ठानसमुद्देशः ॥ २५ ॥

—०:०—

[9]लोभ-प्रसाद-विश्वासैर्बृहस्पतिरपि पुरुषो वध्यते वञ्चयते वा ।

---

१ क्षुधादिपीडितस्य स्त्रीसङ्गो वर्ज्य इत्याह । क्षुदिति । २ सन्ध्यादीन् वर्ज्यान् कालानाह । नेति । ३ कुलस्त्रिया निषेधात् वेश्यादिसेवने न दोष इति गम्यते । ४ परकीयायाः स्त्रिया गृहे गत्वा न शयीतेत्याह । नेति । राजेति शेषः । ५ तस्य हेतुमाह । वंशेति । ६ राजकुले राजगृहे । अत्र ऐतिह्यमाह । श्रूयत इति । ७ पल्हवा नाम जनपदाः तेषां नरेन्द्रम् । हयपतिरिति । मेषस्य विषाणे शृङ्गे निहितेन विषेण कुशस्थलेश्वरं जघान हतवान् इति श्रूयते । ८ एवं सत्यपि सर्वत्र अविश्वासो न कार्य इत्याह । सर्वत्रेति । अविश्वस्ते कापि क्रिया न सिद्ध्यतीत्यर्थः ।

---

९ अथ सदाचारसमुद्देशं वक्तुं आदौ लोभादीन् वर्ज्यानाह । लोभेति । अतिलोभेन अतिप्रसादेन अतिविश्वासेन च बृहस्पतिसमः बुद्धिमानपि पुमान् वध्यते वञ्च्यते वा वचनां प्राप्नोति ।

बलवता[1]ऽवष्टब्धस्य विदेशगमनं तदनुप्रवेशो वा श्रेयान् । यद्यन्यथा नास्ति क्षेमोपायः । विदेशवासोपहतस्य कोनाम पुरुषकारः[2] । यो येनाविज्ञातस्वरूपः[3] पुरान् स तस्य महानपि लघुरेव । अलब्धप्रतिष्टस्य निजान्वयेना[4]हङ्कारः कस्य न लाघवं करोति । आर्तः[5] सर्वो ऽपि भवति धर्मबुद्धिः । स नीरोगो, यः स्वयं धर्माय समीहते । व्याधितस्य तु धैर्यान्न परमौषधमस्ति । स महाभाग्यो, यस्य न दुरपवादोपहतं जन्म । पराधीनेष्वर्थेषु[6] स्वोत्कर्षसम्भावनं मन्दमतीनाम् । भयेषु न विषादः प्रतीकारः, किन्तु धैर्यावलम्बनम् । किं स धन्वी[7] तपस्वी वा, यो रणे मरणे वा शरसन्धाने मनःसमाधाने च मुह्यति । कृतेः प्रतिकृतिमकुर्वतो नैहिकं फलमस्ति नाप्यामुत्रिकम्[8] । शत्रुणापि सूक्तमुक्तं[9] न दूषयितव्यम् । कलहजननं विप्रीत्युत्पादनं च दुर्जनानां धर्मः[10] न सज्जनानाम् । न तस्य श्रीरभिमुखी, यो लब्धार्थमात्रेण भवति सन्तुष्टः[11] । तस्य कुतो वंशवृद्धिर्यो न शमयति वैरानुबन्धम् । भीतेष्वभयदानान्न परं दानमस्ति । स्वस्वसम्पत्तौ कामितमर्थं दुग्धे, किन्तूत्साहः[12] ।

---

१ बलवता शत्रुणेत्यर्थः । अवष्टब्धो ऽवरुद्धः । विदेशगमन देशान्तर गमनम् । तदनुप्रवेशः तस्य अनुसरणम् । एतदपि अन्यथा मतिर्नास्ति चेदेव कर्तव्य नान्यथा । २ पुरुषकारः पुरुषप्रयत्नः । ३ अविज्ञातं स्वरूप येन सः । ४ निजकुले जातानां पूर्वेषां प्रतापशालिनां पुरुषाणां वर्णनं तदन्वयजोऽहमित्येतावतैव अभिमानः भवति । परं स सर्वमपि पुरुष लघूकरोति । ५ आर्तः पीडितः । ६ पराधीनैरेवार्थैः स्वोत्कर्षसम्भावनं बुद्धिहीनैरेव क्रियत इत्यर्थः । ७ किं धन्वी कुत्सितः धनुर्धर इत्यर्थः । ८ आमुत्रिक पारलौकिकम् । ९ सूक्तं युक्तियुक्तं पथ्य च । न दूषयितव्यं असदिति न मन्तव्यम् । १० दुर्जनस्य धर्मः सज्जनेन नानुष्ठातव्य इत्याह । कलहेति । ११ लब्धमात्रेणैव न सन्तुष्टो भवेत् । किन्तु व्यवसायेनाधिकसम्पादने यत्नवान् भवेदित्याह । नेति । १२ उत्साह एव कामितमर्थं सम्पादयति ।

स खलु स्वस्यैवाऽपुण्योदयोऽपराधो वा, यः सर्वेषु कल्पवृक्षत्फलवानपि स्वामी भवत्यात्मनि वन्ध्यः। स सदैवदुःखदुःस्थितो यो मूलधनमसंवर्द्धयन्ननुभवति । मूर्ख-दुर्जन-पतितैः सह सङ्गः कस्य नाम श्रेयस्करः । किन्तेन प्रीतेन, न यस्य हरिद्राराग इव चित्ताऽनुरागः । आत्मानमविज्ञाय विक्रमः कस्य न पराभवं करोति । न क्षान्तिः पराभियोगस्योत्तरं, किन्तु प्रत्युपन्यासः । अस्थाने रूक्षतायां कुतः परिजनः । न मृतेषु रोदितव्य, अश्रुपातसमा हि किल निपतन्ति तेषां हृदयेष्वङ्गाराः । अतीते वस्तुनि शोकः श्रेयानेव, यदि तत्सङ्गः स्यात् । शोकमात्मनि चिरमनुवासयन्त्रिवर्गमुद्वासयति । स किं पुरुषो, योऽकिंचनः सन् करोति विषयाभिलाषम् । अपूर्वेषु प्रियपूर्व सम्भाषणं स्वर्गात्च्युतानां लिङ्गम् । न ते मृताः, येषामिहास्ति शाश्वती कीर्तिः । स केवलं पुरुषो भूभाराय जातो, न यस्य यशोभिर्धवलितानि भुव-

---

१ स्वामी अधिपतिः राजा वा । वन्ध्यः निष्फलः मनोरथपूरणाकर्ता । २ मूलधन भाण्डं न संवर्द्धयति स सदैव दुःस्थितो भवतीत्याह । सदैवेति । वैश्य इति शेषः । ३ हरिद्राया राग बहिर्न प्रकाशते परमन्तः प्रकाशत एव । एवं यस्य अन्तर्मनसि रागः प्रेम न वर्तते तेन प्रीतेनापि कीं न किमपीत्यर्थः । ४ आत्मानमविज्ञाय आत्मबलमविज्ञायेत्यर्थः । ५ क्षान्तिः क्षमा । प्रत्युपन्यासः वैरनिर्यातने यत्नः । ६ अस्थाने अकारणे रूक्षता क्रौर्यम् । ७ मृतेषु विषये न रोदितव्यम् । किं तु तस्य यथाविधि क्रियाः कार्याः। अत एव याज्ञवल्क्येनाप्युक्तम् । "प्रेतो भुङ्क्ते यतोऽवशः । तस्मान्न रोदितव्यं ही क्रियाः कार्या यथाविधि" इति । तेषां मृतानाम् । ८ अतीते नष्टे । यदि तस्य पुनः समागमः स्यात् तर्हि शोकः श्रेयान् नान्यथा । ९ चिरकालं शोको न कर्तव्य इत्याह । शोकेति । अनुवासयन् स्थापितं कुर्वन् । त्रिवर्ग धर्म-कामार्थान् । उद्वासयति नाशयति । शोकाकुलस्य धर्माद्याचरण न भवेदित्यर्थः । १० किं पुरुषः कुत्सितः पुरुषः । अकिंचनः दरिद्रः ।११ अपूर्वेषु अपरिचितेषु । ते पुरुषाः देवसमाना इत्यर्थः ।

नानि । परोपकारोद्यतानां का नाम शरणागतेषु परीक्षा । अभिचारेण परोपघातो महापातकिनां, न महासत्वानाम् । तस्य भूपतेः कुतोऽभ्युदयो विजयो वा, यस्य द्विषत्सभासु वा नास्ति गुणग्रहणे प्रागल्भ्यम् । तस्य गृहे कुटुम्बं स्थापनीयं, यत्र न भवति परेषामामिषं विप्लुतं वा । परस्त्री-द्रव्ययोरक्षणे न नाम मनः किमपि फलम्, विप्लुतेतु भवेन्महाननर्थसम्बन्धः । आत्मानुरक्तं कथमपि न त्यजेत्, यद्यस्ति दत्ते तस्य सन्तोषः । आत्मसम्भावनः परेषामसहनश्च भृत्यो हि सपरिजनमपि स्वामिनं करोत्येकाकिनम् । अपराधानुरूपो दण्डः सत्पुत्रेऽपि प्रणेतव्यः देशानुरूपः करो ग्राह्यः । प्रतिपत्त्यनुरूपं वचनमुदाहर्तव्यम् । आयानुरूपो व्ययः कर्तव्यः। ऐश्वर्यानुरूपो विलासो विधातव्यः। सहायानुरूपं कर्म आरब्धव्यम् । धन-श्रद्धानुरूपस्त्यागो ऽनुसर्तव्यः । स पुमान् सुखी, यस्यास्ति सन्तोषः । रजस्वलाभिगामी चाण्डालादप्यधमः पुरुषः । सलज्जं निर्लज्जं न कुर्यात् । स पु-

---

१ परीक्षा अयं सज्जनो ऽसज्जनो वेत्यादिलक्षणा । २ महासत्वानां बलाढ्यानां शूराणां चेत्यर्थः । ३ शौर्येण विद्वत्तया चानलङ्कृतस्य अभ्युदयः उत्कर्षः विजयश्च कुतः स्यात् ? न कुतो ऽपीत्यर्थः । ४ आमिषं भक्ष्यस्थानीयं तद्वशमित्यर्थः।५ विप्लुतं नष्टम् । अनर्थस्य अरिष्टस्य सम्बन्धः । ६ अल्पमधिकं यत्स्वसामर्थ्यानुरूपं दीयते तेनैव यदि स सन्तुष्टः भवेत् तर्हि त आत्मनि अनुरक्तं जनं विपद्यपि न त्यजेत् । ७ आत्मसम्भावनः आत्मानमेव बहुमन्यमानः परेषां उत्कर्षं असहनश्च भृत्यः अन्येषां भृत्यानामसन्तोषमुत्पाद्य तेषां नाशेन स्वामिनं एकाकिनं भृत्यरहितं करोति। ८ सत्पुत्रे आज्ञानुवर्तिनि पुत्रे। स्वस्येति शेषः । ९ प्रतिपत्तिरनुभवः तदनुरूपं वचनं वाच्यम् । असम्भावितं न वदेदित्यर्थः ।१० त्यागो दानम् । स्वधनानुरूपः श्रद्धानुरूपश्च कर्तव्यः । ११ यतः त्रैलोक्यलाभेऽपि तृष्णा न जीर्यति अतः सन्तोषेणैव सुखम् । "सन्तोषो नन्दनवनम्" इत्युक्तत्वात् । १२ यः अकार्यं कर्तुमिच्छति परं स्वसान्निधौ लज्जते प्रच्छन्नतयानुतिष्ठति च । तस्य तत्कर्म स्वयं दृष्ट्वा तं निर्लज्जं न कुर्यात् ।

मान्पटावृतो ऽपि नग्न एव यस्य नास्ति सच्चारित्रमावरणम्[1] । स नग्नोऽपि अनग्नो यो न भूषितः सच्चरित्रेण । सर्वत्र संशयानेषु नास्ति कार्यसिद्धिः । न क्षीर-घृताभ्यामन्यत्परं रसायनमस्ति[2] । परोपघातेन वृत्तिर्[3]निर्भाग्यानाम् । वरमुपवासो, न पुनः पराधीनं भोजनम् । स देशोऽनुसर्तव्यो, यत्र नास्ति वर्णसङ्करः । स जात्यन्धो, यः परलोकं[4] न पश्यति । व्रतं विद्या सत्यमानृशंस्यमलोभवाचश्च ब्राह्मण्यं[5], न पुनर्जातिमात्रम् । निःस्पृहानां का नाम परापेक्षा । कं नाम पुरुषमाशा न क्लेशयति । संयमी वा गृहस्थाश्रमी वा तत्पदमर्हति, यस्याऽविद्या-तृष्णाभ्यामनुपहतं[6] चेतः। शीलमलङ्कारः[7] पुरुषाणां, न देहखेदावहो बहिराकल्पः । कस्य नाम नृपतिः । अप्रियकर्तुर्न प्रियकरणात्[8]परं मारणकारणमस्ति । अप्रयच्छन्नर्थिने न परुषं ब्रूयात् । सा श्रीर्मरुभूमिः[9], यत्रार्थिनो न भवन्ति प्राप्तकामाः । प्रजापरिपालनं हि राज्ञो यज्ञः, न पुनर्भूतानामालम्भः[10] । नानपराधिसत्वव्यापत्तये[11] नृपाणां बलं धनुर्वा, किन्तु शरणागतरक्षणाय ।

## इति सदाचारसमुद्देशः ॥ २६ ॥

---

१ सच्चरित्रं सद्वर्तनम् । २ रसायनं औषधम् । आयुर्बलवृद्धिकारित्यर्थः । ३ वृत्तिः जीवनमित्यर्थः । ४ परलोक पुण्यापुण्यकृतान् लोकान् न पश्यति तेषामस्तित्वं न जानाति । ५ ब्राह्मण्य गुणकर्मविशिष्टं न केवलजातिविशिष्टमित्याह । व्रतेति । ६ अविद्या अज्ञानम् । तृष्णा प्रसिद्धा ताभ्यां यत्र चेतः अनुपहतं तत्पद संयमी योगी गृहस्थाश्रमी वा अर्हति । तेन तत्पदं सम्पादनीयमित्यर्थः । ७ सद्वर्तनमेव पुरुषाणां अलङ्कारः न कटककुण्डलालङ्कारा इत्याह । शीलेति । आकल्प. भूषणानि । ८ प्रियकरणेन स लज्जयां मृतकल्पो भवतीत्यर्थः । एतदभिजातस्यैव नाकुलीनस्य । ९ मरुभूमि. निष्फलेत्यर्थ. । १० आलम्भः यज्ञे पशुमारणम् । ११ अनपराधिनः सत्वस्य प्राणिनः नाशाय न, अपितु शरणागतरक्षणायैवेत्यर्थः ।

कलत्रं नाम नराणामनिगडमपि दृढं बन्धनमाहुः । त्रीण्यवश्यं भर्तव्यानि माता कलत्रं अपत्यं अप्राप्तव्यवहाराणि चापत्यानि इतरेषामपि । दानं तपः प्रायोपवेशनं वा तीर्थोपासनस्य फलम् । तीर्थोपवासिषु देवस्वापरिहरणं क्रव्यादेषु कारुण्यमिव, स्वाचारच्युतेषु पापभीरुत्वमिव प्राहुः । अधार्मिकत्वमतिनिष्ठुरत्वं वञ्चकत्वं प्रायेण तीर्थवासिनां प्रकृतिः । स किं प्रभुः, यः काल एव न सम्भावयति भृत्यान् । स किं भृत्यः स खा वा, यः कार्यमुद्दिश्यार्थं याचते करोति चाङ्गाकृष्टिम् । सा किं स्त्री, या अर्थेन प्रणयिनी । स किं देशो, यत्र नास्त्यात्मनो निर्वृतिः । स किं बन्धुः, यो व्यसनेषु नोपतिष्ठते । तत्किं मित्रं, यत्र नास्ति सत्कारः । तत्किं भुक्तं, यत्र नास्त्यातिथिसंविभागः । तत्किं प्रेम, यत्र नास्ति कार्यवशात्प्रवृत्तिः । तत्किमाचरणं, यत्रास्त्यवाच्यता मायाव्यवहारो वा । तत्किमपत्यं, यत्र नास्त्ययनं विनयो वा । तत्किं ज्ञानं, यत्र मदेनान्धता चित्तस्य । तत्किं सौजन्यं, यत्र परोक्षे पिशुनभावः । सा किं श्रीः, यत्र न सन्तोषः सत्पुरुषाणाम् । तत् किं कृतं, यत्रोक्तिरुपकृत-

---

१ अथ व्यवहारसमुद्देशं वक्तुं प्रथमं कलत्रमाह । कलत्रमिति । अनिगडं शृङ्खलाशून्यम् । २ अप्राप्तव्यवहाराणि अप्रौढानीत्यर्थः । ३ प्रायोपवेशनं आमरणपर्यन्त तिष्ठामीति सङ्कल्पं कृत्वा एकस्मिन् प्रदेशेऽवस्थानम् । ४ तीर्थवासिषु द्विजेष्वित्यर्थः । देवद्रव्यस्य परिहरण न सुलभमित्याह । देवेति । यथा क्रव्यादेषु व्याघ्रादेषु दयालुत्वमाश्चर्यकृत् तथा तीर्थवासिषु देवस्ववर्जनं आश्चर्यकारकमित्यर्थः । निदर्शनान्तरमाह । स्वाचारेति । ५ तीर्थवासिनां प्रकृतिमाह । वञ्चकत्वादीनि । प्रकृतिः स्वभावसिद्धानीत्यर्थः । ६ अर्थ द्रव्यम् । अङ्गाकृष्टिं अङ्गसङ्कोचम् । ७ अर्थेन प्रणयिनी द्रव्यार्थं प्रेमलेत्यर्थः । ८ निर्वृतिः समाधानम् । ९ कार्यकरणे प्रवर्तनामित्यर्थः । १० अयन द्रव्यादिसम्पादनम् । ११ निन्दाकरणं पैशून्यं तस्य भावः ।

स्य । तयोः को नाम निर्वाहः, यौ द्वावपि प्रभूतमानिनौ[1] पण्डितौ लुब्धौ मूर्खौ चासहनौ वा । स्ववान्त इव स्वदत्ते[2] ऽभिलाषं न कुर्यात् । उपकृत्य मूकभावो ऽभिजातानाम् । परदोषश्रवणे मूकभावः[3] सत्पुरुषाणाम् । परकलत्रविषये ऽन्धभावो[4] महाभाग्यानाम् । शत्रावपि गृहागते सम्भ्रमः[5] कर्तव्यः, किं पुनर्न महति । अन्तर्घनसार इव स्वयं स्वस्य धर्मो[6] न प्रकाशयितव्यः । मदप्रमादजे दोषे गुरुषु निवेदनमनु[7] प्रायश्चित्तं च प्रतीकारः । श्रीमतः[8] कायक्लेशो न देव-गुरु–द्विजातिथीन् प्रीणाति, किन्तु विभवसंविभागः[9] । चणका[10] इवोदरमध्यस्था अपि नीचा नाविकुर्वाणास्तिष्ठन्ति । स पुमान्धन्यः परितो, यः प्रत्युपकारानपेक्षः परानुपकरोति । अज्ञानस्य वैराग्यं भिक्षोर्विटत्वं अनक्षस्य विलासो वेश्यारतस्य शौचमविदितवेदितव्यस्य तत्वाग्रहः इति पञ्च केषांचित् शिरः शूलानि[11] । सहि पञ्चमहापातकी, योऽशस्त्र-

---

१ प्रभूतो ऽधिकः मानः यस्य । २ स्वयमेव दत्ते वस्तुनि पुनराभिलाषो न कर्तव्य इत्याह । स्ववान्त इति । ३ परस्य दोषश्रवण न कर्तव्यमित्यर्थः । ४ अन्धभावः परस्य कलत्रं न पश्येदित्यर्थः ।५ तस्य सत्कारः सम्भ्रमः । ६ धर्मः स्नान-दानादिरूप. । तस्मिन् हि स्वयमेव प्रकाशिते पुण्यक्षयो भवतीत्याहुर्महर्षयः । लोकेऽपि स्वमुखेन स्वस्य वर्णन मद्यमेव ।७ पश्चात्तापपूर्वक गुरुषु निवेदनम् । अनु अनन्तर प्रायश्चित्ताचरण च । ८ कायक्लेशात्मक तीर्थयात्रादिप्रायश्चित्त निर्धनानामेवोपदेष्टव्य न धनवतामित्याह । श्रीमत इति । न प्रीणाति न सन्तोषयति । ९ विभवसंविभागः द्रव्यव्ययात्मकमेव प्रायश्चित्त तैः कर्तव्यमित्यर्थः ।१० दुर्जना लालनादिना अभ्यन्तराः कृता अपि न स्वभावं त्यजन्तीत्याह । चणकेति । अविकुर्वाणा अपकारमकुर्वाणा इत्यर्थः ।११ भिक्षोः संन्यासिनः । विटत्व विटस्य भावः । विटा नाम वेश्यानां पुरुषसंयोगादिना स्वोदरपूरणकर्तार । अनक्षस्य इंद्रियपाटवरहितस्य । अविदितं वेदितव्यं च येन तादृशस्य तत्व वस्तुस्वरूपविचारे एतानि केषांचित् तत्वविदा शिरःशूलानि पीडाजनकानीत्यर्थः ।

मशास्त्रं वा पुरुषमभियुञ्जीत। उपश्रुतिं श्रोतुमिव कार्यवशान्नीचमपि लोकं स्वयमुपसर्पति। अर्थी दोषं न पश्यति। गृहदास्यभिगमो गृहं गृहिणीं गृहपतिं च प्रत्यवसादयति। वेश्यापरिग्रहो देव-द्विज-बन्धूनामुच्चाटनमन्त्रः। अहो लोकस्य पापं, यन्निजा स्त्री रतिरपि भवति निम्बसमा, परगृहीता शुन्यपि भवति रम्भासमा। स सुखी यस्यैकएव स्त्रीपरिग्रहः। व्यसनिनो यथाऽभिसारिकासु सुखं, न तथा अर्थवतीषु। महान्धनस्य व्ययः तदिच्छानुवर्तनं दैन्यं चार्थवतीषु। आस्तरणं कम्बलो जीवधनं गर्दभः परिग्रहो वोढा सर्वकर्माणश्च भृत्याः इति कस्य नाम सुखावहानि। यतिनृपति-वेश्या-चर-भण्डानां परिस्पन्दो महान्, अर्थतस्तु न किं च न। लोभवति भवन्ति विफलाः सर्वे गुणाः। प्रार्थना कं नाम न लघयति। न दारिद्र्यात्परं लाघवकारणमस्ति। यतो महानपि भवत्यन्यदोषेण शङ्कनीयः। धनवत्यलब्धार्थोऽपि लोको भवति सन्तुष्टः। तं दुःश्रीमधिपतयोऽभिभवन्ति स चटुः कामः। न रत्नाहिरण्यपूताज्जलात्परं विशुद्धिकरणमस्ति। स उत्सवो, यत्र बन्दीमोक्षो दीनोद्धरणं च। तानि पर्वाणि येष्वतिथि-परजनयोः कामं सन्त-

---

१ अशस्त्रं शस्त्ररहित। अशास्त्रं शास्त्रानाभिज्ञम्। २ कार्यवशान्नीचमप्याश्रयेदित्याह। उपश्रुतिमिति। यथा उपश्रुतिं श्रोतु चण्डालगृहं गच्छन्ति तथेत्यर्थः। ३ प्रत्यवसादयति नाशयतीत्यर्थः। ४ रतिरपि रतिसमापि रूपवतीति यावत्। निम्बसमा कटुः अप्रियेत्यर्थः। रम्भासमा प्रियेति यावत्। ५ अर्थवतीषु धनसम्पन्नासु वेश्यास्वित्यर्थः। अभिसारिका व्यभिचारिण्यः स्त्रियः। ६ जीवधन जीवद्धनम्। विवाहितास्त्रिया एव परिग्रहः। सर्वकर्माणः यत्किमपि कर्मकर्तारः न नियतकर्मकराः। एतानि सर्वेषामपि सुखावहानि भवंतीत्यर्थः। ७ यत्यादीनां परिस्पन्दः स्वगृहे आगमनम्। ८ प्रार्थना याचना। लघयति लघुं करोति। ९ पर्वाणि पुण्या दिवसाः।

र्पणानि । तास्तिथयो, यासु धर्माचरणं न अधर्माचरणम् । सा तीर्थयात्रा, यदस्यामकृत्यानिवृत्तिः। तत्पाण्डित्यं, यत्र वयोविद्योचितमनुष्ठानम् । तच्चातुर्यं, यत्र परप्रीत्या स्वकार्यसाधनम् । तल्लोकोचितत्वं, यत्सर्वजनादेयत्वम् । तद्वाग्मित्वं, यत्र न परोद्वेगः ।तद्वीरत्वं, यत्र यौवनमनपवादम् । तत्सौभाग्यं, यत्रादानं परवशीकरणम् । सा सभा अरण्यानी, यस्यां न सन्ति विद्वांसः । किन्तेनात्मनः प्रियेण, यस्य न भवति स्वयं प्रियः । स किं प्रभुर्यो न सहते परसम्बाधम् । न लेखाद्वचनं प्रमाणम् । अनभिज्ञाते लेखे नास्ति सम्प्रत्ययः । त्रीणि पातकानि सद्यः फलन्ति । स्वामिद्रोहः स्त्रीवधो बालवधश्चेति । अप्लवस्य समुद्रावगाहनमिव अबलस्य बलवता सह विग्रहाय टिरिट्टिलितम् । बलवन्तमाश्रित्य विकृतिभजनं सद्यो मरणकारणम् । प्रवासश्चक्रवर्तिनमपि सन्तापयति, किम्पुनर्नान्यम् । बहु पाथेयं मनोऽनुकूलः परिजनः सुविहितश्चोपस्कारः प्रवासेषु दुःखोत्तरणतरण्डको वर्गः ।

## इति व्यवहारसमुद्देशः ॥ २७ ॥

———ooo———

गुण-दोषयोस्तुलादण्डसमो राजा । स्वगुण-दोषाभ्यां जन्तुषु गौरवलाघवे । राजात्वधिपतीनां समवर्ती च तत्फलमुद्भावय-

---

१ यत्र येन भाषणेन परस्य उद्वेगो न भवति तद्वाग्मित्वं न केवलं वाचोयुक्तिपटुत्वम् । २ अनपवादं नास्ति अपवादः परस्त्रीविषयादिसङ्करूपः यत्र । ३ सम्प्रत्ययः विश्वासः । ४ अप्लवस्य नौकारहितस्य । ५ विकृतिः वैवर्ण्यादिः । ६ उपस्कारः साधनम् । तरण्डकः साधन पोत इत्यर्थः ।

७ अथ विवादसमुद्देशं वक्तुं प्रथमं राजानं सभ्यादींश्चाह । गुण-दोषेति ) राजा गुणे दोषे च समो भूयात् लोकस्य गुणं दोषंच यथान्याय पश्येदित्यर्थः ।

ति। आदित्यवद्यथावस्थितार्थप्रकाशनप्रतिभाः सभ्याः[1]। अदृष्ट-श्रुतव्यवहाराः प्रत्यर्थिनः सामिषाश्च न सभ्याः[2]। लोभ-पक्षपाताभ्यामयथावृत्तयः सभ्याः सभापतिश्च सद्यो मानार्थहानिं लभेयुः। तत्रालं विवादेन, यत्र स्वयमेव सभापतिः प्रत्यर्थी[3]। सभ्यसभापत्योरसामञ्जस्येन कुतो जयः? । किं बहुभिश्छगलैःश्वा न क्रियते। विवादमास्थाय यः सभायां नोपतिष्ठते, समाहूतोऽपसरेत्, पूर्वोक्तमुत्तरोक्तौ च बाधते, निरुत्तरः परोक्तेषु, युक्तमुक्तं न प्रतिपद्यते, स्वदोषमनुद्धृत्य परमुपालम्भते, यथार्थवादेऽपि च विद्वेष्टि स सभापतिपराजितलिङ्गानि[4]। छलेना[5]प्रतिभासेन वचनाकौशलेन वा नास्त्यर्थहानिः। भुक्ति[6]-साक्षि-शासनेषु पूर्वपूर्वं प्रमाणम्। भुक्तिः साक्रोशा साक्षिणो विप्रतिपन्नाः शासनं च कूटलिखितमिति न विवादं समापयन्ति[7]। बलात्कारमन्यायकृतं राजोपधिकृतं[8] च न प्रमाणम्। वेश्या-कितवयोरुक्तं[9] ग्रहणकारितया प्रमाणयितव्यम्। असत्यंकारे[10] व्यवहारे नास्ति विवादः। नीवीन्यासेषु विवादः पुरुषप्रामाण्यात्सत्यापयितव्यो दिव्यक्रि[11]-

१ सभ्यानाह। आदित्येति। यथा आदित्यः यथावस्थितमेवार्थं प्रकाशयति तथा यथावस्थितस्य व्यवहारस्य प्रकाशने येषां प्रतिभा तादृशाः सभ्याः, नो इतरे। २ यैर्व्यवहारोऽदृष्टोऽश्रुतश्च तादृशाः पुरुषाः कथमपि सभ्या न भवन्ति। ३ सभापतिर्न्यायाधीशः प्रत्यर्थी परिपन्थी। पक्षपातवानित्यर्थः। ४ पराजितानामर्थि-प्रत्यर्थि-साक्षिणां लिङ्गान्याह। विवादमास्थायेत्यादिना सत्यलक्षणान्युक्तानि। ५ छलेन कपटेन। ६ भुक्तिः द्वादशसंवत्सरात्मिका। शासनं पत्रम्। ७ कदाप्यसमापनीयस्य व्यवहारस्य लक्षणमाह। भुक्तिरिति। साक्रोशा साक्षेपा। विप्रतिपन्ना नष्टा इत्यर्थः। कूटलिखितं कपटलिखितम्। ८ राज्ञः छद्मना अन्येनैव कृतम्। ९ वस्तुतः वेश्यादिभिरुक्तं न प्रमाणं तथापि क्वचित्प्रमाणत्वेन ग्राह्यमित्याह। १० असत्यरूपे व्यवहारे। ११ दिव्यं शपथादिरूपं व्यवहारमयूखादावुक्तप्रकारं वा।

थया वा। यादृशेतादृशे साक्षिणि न दैवी क्रियास्ति, किं पुनरुभयसम्मते मनुष्ये । श्रूयते हि वनस्पति-वनमार्जाराभ्यां साक्षिभ्यां अर्थसिद्धिः । यो ऽभिभुञ्जीताभिलुम्पेत वा तस्य शपथः क्रोशो दिव्यं वा । अभिचारयोगैर्विशुद्धस्याभियुक्तार्थसम्भावनायां प्राणावशेषोऽर्थापहारः । विट-लिङ्गि-नास्तिक-स्वाचारच्युत-पतितानां न दैविकी क्रियास्ति । तेषां युक्तितो ऽर्थस्य सिद्धिरसिद्धिर्वा । पत्रस्थे भाषोत्तरे विचार्य परछिन्द्यात् । परस्य विप्रलापे न युगैरपि विवादपरिसमाप्तिः, ताभ्यामानन्त्याद्विप्रकृतोक्तीनाम् । सभायां परिभूमिं नाभिनिविशेत् । मिथः सञ्जल्पनं वा न कुर्वीत । ग्रामपुरवृत्तो व्यवहारः । सति विवादे राजानमुपेयात् । राज्ञा दृष्टे व्यवहारे नास्त्यनुबन्धः । राजाज्ञां मर्यादां वाऽतिक्रामन्सद्यःफलेन दण्डेनोपहन्तव्यः । नहि दुर्वृत्तानां दण्डादन्यो ऽस्ति विनयोपायः । यतो ऽग्निसंयोग एव वक्रं काष्ठं सरलयति । रिक्तं सर्वे ऽपि परिभवन्ति । न तथा वक्रः स्तरुश्छिद्यते, यथा सरलः । शक्तस्यापराधिषु क्षमा न ह्यात्मतिरस्कारः अतिक्रम्यवर्तिषु । सर्पादिव दृष्टप्रत्यवायाद्राज्ञः सर्वे ऽपि बिभ्यति । अनायकां बहुनायकां वा सभां न प्रविशेत् । गुणपुरश्चारिणः सिद्धे कार्ये स्वासनं किंचिदसिद्धे प्रत्यवायः । न सा गोष्ठी प्रस्तोतव्या, यत्र परेषां प्रतापः । स्वो

---

१ उभयसम्मते वादिप्रति-वादिसम्मते धर्मज्ञे साक्षिणि इत्यर्थः । २ शपथः कस्येत्याकाङ्क्षायामाह । यः अभिभुञ्जीतपरकीयधनमित्यर्थः ३ शपथादिभिर्विशुद्धस्यापि यदि चार्थसम्भावना स्यात् तर्हि तस्य प्राणानवशेषयित्वा अन्यःसर्वोऽप्यर्थो हरणीयः । ४ भाषोत्तरे मुखत उक्ते । ५ सभायामिति शेषः । ६ अनुबन्धः दोषः । ७ दृष्टः प्रत्यवायः यस्मात् तादृशे राज्ञि सर्वे बिभ्यति । ८ प्रस्तोतव्या कर्तव्येत्यर्थः ।

पालम्भपरिहारेण परमुपालम्भेत् । स्वामिनमुत्कर्षयन् गोष्ठीमवतारयेत् । न भर्तुरभियोगात्परं सत्यमसत्यं वा वदन्तमवगृण्हीयात् । नानभियुक्तः प्रत्यभियुञ्जीत । अर्थसम्बन्धः सहवासस्य वा कलहः समनिर्धिराकस्मिको वार्थ लाभः प्राणैः सह सञ्चितमर्थमपहारयति । ब्राह्मणानां हिरण्य-यज्ञोपवीतयोरुपस्पर्शनं शपथः । क्षत्रियाणां शस्त्र-रत्न-भूमि-वाहन-पैल्याणानाम् । वैश्यानां वैश्रवण-पोतयोः काकिणी हिरण्ययोर्वा । शूद्राणां क्षीर-बीजयोर्वल्मीकस्य वा । कारूणां यो येन कर्मणा जीवति तस्य तत्कर्मोपकरणानाम् । व्रतिनामन्येषां चेष्टदेवतापादस्पर्शनं प्रदक्षिणीकरणं दिव्यम् । कोश-तण्डुल-तुलारोहणैर्विशुद्धिः । व्याधानां च धनुर्लङ्घनम् । अन्त्यावसायिनामार्द्रचर्मावरोहणम् । वेश्या महिला, चण्डो भृत्यः, श्रेणी नियोगी, नियोगी च मित्रमिति चत्वारि अशाश्वतानि । क्रीतेष्वाहारेष्विव पण्यस्त्रीषु न आस्वादः । यस्य यावान्परिग्रहः तावानेव तं सन्तापयति । गजे गर्दभे च राज-रजकयोः सम एव चिन्ताभारः । मुर्खस्याग्रहो नापायमनवाप्य निवर्तते । कार्पासो ऽग्निरिव मुर्खस्योपशान्तावुपेक्ष्यमा-

---

१ आकस्मिकोऽर्थलाभः प्राणैः सह सञ्चित प्रथमसम्पादितमप्यर्थं नाशयति । २ ब्राह्मणादीनां शपथस्वरूपमाह । हिरण्येति । ब्राह्मणेन हिरण्यं यज्ञोपवीत वा गृहीत्वा शपथः कार्यः । ३ पल्याण भाषाया 'जीन' इति ख्यातम् । ४ द्रव्यसञ्चयस्थान वैश्रवणः । ५ बीजं धान्यादीनाम् वल्मीकं प्रसिद्धम् । वल्मीकस्यैव स्पर्शने को विशेष इतिचेत् तेतु पृथ्वीकर्षणादिना जीवन्ति । वल्मीकं पृथिव्या मुखस्थानमित्याचक्षते । अतो वल्मीकस्पर्शनमाहेत्यर्थः । ६ कारवः शिल्पिनः तेषां तु यो येन जीवति तस्य तेनैव शपथः कर्तव्य इत्याह । ७ तुलायामारोहणमप्येकं दिव्य तद्विधिरन्यत्र मयूरवादौ द्रष्टव्यः । ८ महिला स्त्री वेश्या वेश्याजातीया । भृत्यः चण्डः अत्यन्तकोपनः । ९ यावान् राज्ञः गजे चिन्ताभारः तावान् रजकस्य गर्दभे चिन्ताभारः । उभयेषांस्तुल्य एवोपयोगः ।

णमेवौषधम् । मूर्खस्याभ्युपपत्तिकरणमुद्दीपनदण्डः । क्रोधाग्निं-ज्वलितेषु तत्क्षणं प्रशमाग्रहो घृताग्निष्वाहुतिनिक्षेप एव । अनभिज्ञोऽन्धो अन्धानिव म्रियमाणो मूर्खःकरमाकर्षति। स्वयमगुणं वस्तु न खलु पक्षपाताद्गुणवद्भवति । न खलु गोपसेहाद्दुग्धात्क्षीरं क्षरति ।

## इति विवादसमुद्देशः ॥ २८ ॥

—०:०—

शम-व्यायामौ योग-क्षेमयोर्योनिः । कर्मारम्भाणां योगाराधनो व्यायामः । कर्मफलोपभोगानां क्षेमसाधनं शमः । दैवं धर्माधर्मौ मानुषं च कर्म लोकं पापयति, तच्चिन्त्यम् । अचिन्त्यं च दैवम् । अतर्कितोपस्थितार्थानर्थसम्बन्धो दैवायत्तः । बुद्धिपूर्वं हिताहित-प्राप्ति-परिहारसम्बन्धो हि पुरुषकारायत्तः । सत्यपि दैवे ऽनले निःकर्मणो न भद्रमस्ति । न खलु दैवमनीहमानस्याग्रे कृतमप्यलं मुखे प्रवेशयाति । न हि दैवमवलम्बमानस्य धनुः स्वयमेव शरान्सन्धत्ते । पौरुषावलम्बिनो ऽर्थानर्थयोः सन्देहः । निश्चित एवानर्थौ दैवपरस्य । आयुरौषधयोरिव दैव-पौरुषयोः परस्परं सम्बन्धः । समीहितं साधयत्यनुष्ठीयमानः । स्वफलं चानुभावयन् कश्चिद्धर्माधर्ममनुबन्धाति । धर्ममुभयमनुभयं वा । एवमधर्मो ऽपि । योग-क्षेमयोर्निष्पत्त्युपायो नयो, विपत्तिहेतुर-

---

१ क्रोधाग्निना प्रज्वलितस्य तत्क्षणमेव प्रशमाग्रही न कर्तव्य इत्याह ।
२ वक्ष्यमाणलक्षणः शमः व्यायामश्च योग-क्षेमयोः उत्पत्तिस्थानमित्यर्थः ।
३ व्यायाममाह । कर्मणां आरम्भाणां योगस्य आराधनलक्षणो व्यायामः ।
४ दैवे अनुकूले सत्यपि कर्मरहितस्य न भद्रमस्ति । ५ केवलं दैवपरेण न भवितव्यमित्याह । निश्चितेति । दैवपरस्य दैवमेव प्रमाणत्वेन स्वीकृत्य कार्यारम्भमकुर्वत इत्यर्थः । ६ यदि कश्चन कर्माणि प्रवृत्तो भवेत् तर्हि स धर्ममधर्मं वा लभेत ।

नयः । त्रिपुरुषमूर्तित्वान्न भूभुजः परं प्रत्यक्षं दैवमस्ति । प्रतिपन्नप्रथमाश्रमः परब्रह्मणि निष्णातनतिरुपासितगुरुकुलः सम्यग्विद्यामवीत्यकौमारं वयो ऽलंकुर्वन् क्षत्रपुत्रो भवति ब्रह्मा । सञ्जातराज्यलक्ष्मीदीक्षाभिषेकं स्वैर्गुणैः प्रजानुरागं जनयन्तं राजानं नारायणमाहुः । " नाऽविष्णुः पृथिवीपतिः " इति वचनात् । प्रवृद्धप्रतापतृतीयलोचनानलः परमैश्वर्यवानतिमानो राष्ट्रकण्टकासुरान् द्विषद्दानवांश्चोच्छेत्तुं यतते विजीगीषुः भूपतिः पिनाकपाणिः । उदासीन-मध्यम-विजिगीषु-अमित्र पार्ष्णिग्राहाक्रन्दासारान्तर्द्धयो यथा सम्भवगुणगणविभवतारतम्यान्मण्डलानामधिष्ठातारः । अग्रतः पृष्ठतः पार्श्वतः कोणतो वा सन्निकृष्टे मण्डले स्थितो मध्यमादीनां विग्रहीतानां विग्रहे संहितानामनुग्रहे समर्थो ऽपि येनकेनचित्कारणेनान्यस्मिन्भूपतौ विजिगीषमाणे य उदास्ते स उदासीनः । उदासीनवदनियतमण्डलो परभूपापेक्षया स्वयं समधिकबलोऽपि कुतश्चित्कारणादन्यनृपतौ विजिगीषमाणे यो मध्यस्थस्वभावमवलम्बते स मध्यस्थः । राजात्मदैवद्रव्यप्रकृतिसम्पन्नः क्रम विक्रमयोरधिष्ठानं विजिगीषुः य एव स्वस्याहितानुष्ठानेन प्रातिकूल्यं बिभर्ति स एवारिः ।

१ त्रिमूर्तित्वात् ब्रह्म-विष्णु-शिवरूपत्वात् राज्ञः अन्यत् प्रत्यक्षं दैवतं नास्तीत्याह । २ तत्र प्रथमं ब्रह्ममूर्तित्वमाह । प्रतिपन्नेति । प्रथमः ब्रह्मचर्यरूपः आश्रम प्रतिपन्न येन । ब्रह्मा भवति ब्रह्मसदृश इत्यर्थः । ३ विष्णुरूपत्वमाह । सञ्जातेति । अविष्णुः विष्णवंशरहितः पुरुष. पृथिवीपतिः भवितुं नार्हतीत्यर्थः । ४ प्रवृद्धः प्रताप एव तृतीयः लोचनः यस्य । राष्ट्रकण्टका राष्ट्रद्वेषिणः दस्यवादयः त एव असुरा. तानुच्छेत्तुं यतमानो राजा भवति शङ्करसमः । ५ वक्ष्यमाणलक्षणा उदासीनादयः मण्डलानामधिष्ठातार इत्याह । उदासीनेति । ६ उदासीनलक्षणमाह । अग्रत इति । ७ मध्यस्थलक्षणमाह । उदासीनवदिति । अथ विजिगीषुमाह । राजेति । ८ अरिलक्षणमाह । ९ य एवेति ।

मित्रलक्षणमुक्तमेव पुरस्तात् । यो विजिगीषौ प्रस्थिते प्रतिष्ठमाने वा पश्चात्कोपं जनयति स पार्ष्णिग्राहः । पश्चाद्विजिगीषोरमित्रमाक्रन्दः । पार्ष्णिग्राहामित्रमासारः आक्रन्दमित्रं च । अरिविजिगीषोर्मण्डलान्तर्विहितवृत्तिरुभयवेतनः पर्वताटव्यपाश्रयश्चान्तर्द्धिः । अराजविजिगीषुर्लुब्धः क्षुद्रविरक्तप्रकृतिरननुरक्तप्रकृतिरन्यायपरो व्यसनी विप्रतिपन्नमित्रामात्यमन्त्रि-सेनापति-सामन्तः शत्रुरभियोक्तव्यः । अनपाश्रयो दुर्बलाश्रयो वा शत्रुरुच्छेदनीयो विपर्यये पीडनीयः कर्षणीयो वा । समाभिजनः सहजशत्रुर्विरुद्धो विरोधयिता वा कृत्रिमः शत्रुः । अनन्तरः शत्रुरेकान्तर मित्रमिति नैष एकान्ततः । कार्यं हि मित्रत्वामित्रत्वयोः कारणम् । न पुनर्विप्रकर्ष-सन्निकर्षौ । ज्ञानबलं मन्त्रशक्तिः । शशकेनेव सिंहव्यापादनमत्र दृष्टान्तः । कोशदण्डबलं प्रभुशक्तिः । शूद्रक-शक्तिकुमार दृष्टान्तः । विक्रमबलं बलमुत्साहशक्तिः । अत्र रामो दृष्टान्तः । शक्तित्रयोपचितो ज्यायान्, शक्तित्रयापचितो हीनः, समानशक्तित्रयः समः । सन्धि-

---

१ अथ पार्ष्णिग्राहमाह । य इति । २ आक्रन्दलक्षणमाह । पश्चादिति । ३ आसारलक्षणमाह पार्ष्णिग्राहेति । ४ अन्तर्धिमाह । अरिविजिगीषोरिति । ५ अथ कीदृशः शत्रुरभियोक्तव्य इत्याह । अराजेति । क्षुद्राः विरक्ताश्च प्रकृतयोऽमात्यादयो यस्य तादृशः । मन्त्रि-सेनापत्यादयो विप्रतिपन्ना यस्य । एतादृशोऽभियोक्तव्य इत्यर्थः । ६ उच्छेदनीय-पीडनीय-कर्षणीयान् शत्रूनाह । अनपाश्रय इति । ७ कृत्रिमः कार्यनिमित्तः शत्रुरित्यर्थः । ८ अनन्तरः दूरस्थः । ९ अथशक्तित्रयमाह । ज्ञानबलमेव मन्त्रशक्तिः । अत्र दृष्टान्तः । यथाशशकेनाल्पबलेनाऽपि सिंहस्य पराभवः । एष मन्त्रशक्तेः प्रभावः । १० प्रभुशक्तिमाह । शूद्रको नाम राजा स यथा कोशबलेन सैनिकान् वशीकृत्य शक्तिकुमारनामानं शत्रुं जितवान् इति वदन्ति पुराणविदः । ११ सैन्यसम्पत्तिरेवोत्साहशक्तिः । रामः केवलया सैन्यसम्पत्यैव शत्रुं जितवान् ।

विग्रहयानासन-द्वैधीभावः षाड्गुण्यम् । पणबन्धः सन्धिः । अपकारो विग्रहः । अभ्युच्चयो यानम् । उपेक्षणमासनम् । परस्यात्मार्पणं संश्रयः । एकेन सह सन्धायान्येन सह निग्रहकरण एकत्र वा शत्रौ सन्धानपूर्वो विग्रहो द्वैधीभावः । प्रथमपक्षे सन्धीयमानो विगृह्यमाणो विजिगीषुरिति । आश्रयो द्वैधीभावः । द्वितीये तु ह्याश्रयः । हीयमानपणबन्धिना सन्धिमुपेयात्, यदि नास्ति परेषां परिणते ऽर्थे मर्यादोल्लङ्घनम् । अभ्युच्चीयमानः परं विगृण्हीयात्, यदि नास्त्यात्मबलेषु क्षोभः । न मां परो नाहं परमुपहन्तुं शक्तः इत्यासीत, यद्यायत्यामस्ति कुशलम् । गुणातिशययुक्तो ज्यायान्, यदि न सन्ति राष्ट्रकण्टकाः न भवति वा पश्चात्कोपः । स्वमण्डलं गोपयतः परमण्डलाभियोगो विवसनस्य शिरोवेष्टनमिवान्धस्य रज्जुवलनमिव । शक्तिहीनः संश्रयं कुर्यात्, यदि न भवति परेषामामिषम् । बलवद्भयादबलाश्रयणं हस्तिभयादेरण्डाश्रयणमिव । स्वयमस्थिरेणास्थिरस्याश्रयण नद्यां व-

१ षाड्गुण्यमाह । सन्धीति । २ द्वैधीभावमाह । सन्धानपूर्व इति । ३ योऽय हीयमानपणसन्धिः तन सन्धि कुर्याद् । यदि स शत्रुः । ४ मर्यादायाः उल्लंघनं न कुर्याच्चेद् । ५ अभ्युच्चयः उत्कर्षः त प्राप्यमाण । ६ स्वस्थतयात्रस्थानमुत्तमम् । राष्ट्रकण्टकानामभावे । ७ स्वमण्डल स्वराज्यम् । यथा नग्नस्य शिरोवेष्टने कृतेऽपि न नग्नत्वनिवृत्तिः तथा स्वराज्यं अगोपयतः अरक्षतः न सङ्कटनिवृत्तिः स्याद् । तस्मात् प्रथमं स्वराज्यं रक्षयित्वा अनन्तरं पराज्ये अभियोग कुर्याद् इति तात्पर्यम् । ८ सभयं अन्यस्म आश्रयम् । परेषां शत्रूणां आमिषं भक्ष्य अर्थात् वध्य इति भावः । ९ संश्रयकरणे ऽपि बलवत एव कर्तव्यः नाबलस्य । अत्र दृष्टान्तमाह । हस्तिभयात् एरण्ड इति प्रसिद्धस्य निःसारस्य द्रुमस्य आश्रयणे न किमपि फलम् । कालान्तरे भाव्यो ऽनर्थः तत्कालमेव भविष्यति एरण्ड द्रुम सदृशस्य असारस्याश्रयणे ।

हमीनस्याश्रयणमिव । अपमानेन वरं मानिनो मरणं, न परेच्छानुवर्तनेनात्मविक्रयः । आयतिकल्याणे सति कस्मिंश्चित्सम्बन्धे परसंश्रयः श्रेयान् । न राजकार्येषु कालनियमोऽस्ति । मेघवदुत्थानं राजकार्याणाम् । अन्यत्र च शत्रौ च सन्धि-विग्रहाभ्यां द्वैधीभाव गच्छेत्, यद्यन्योऽवश्यमात्मना सहोत्सहते । बलवद्द्वयमध्यस्थितः शत्रुरुभयसिंहमध्यस्थितः करीव भवति सुखसाध्यः । भूम्यर्थिनं भूफलप्रदानेन सन्दध्यात्, न भुवा । फलदानमनित्यं, परेषु गता भूमिर्गतैव । अवज्ञयापि भूमावारोपितस्तरुर्भवति बद्धमूलः, किं पुनर्न भूपतिः? । उपायोपपन्नविक्रमोऽनुरक्तप्रकृतिरल्पदेशो ऽपि भूपतिर्भवति सार्वभौमः । न हि कु-

---

१ अस्थिरेण स्थिरस्यैवाश्रयणं कर्तव्यं, नास्थिरस्य । अत्र दृष्टान्तमाह । नद्यां वहमानो यथा स्वयमाश्रितं च वाहयति । तथा स्वयमस्थिरो ऽन्यमाश्रितं नाशयति इत्यर्थः । २ मरणादपि परेच्छानुवर्तनेन आत्मविक्रयो न कर्तव्य इत्याह । अपमानेति । ३ आयतिरुत्तरः कालः तत्र यदि श्रेय प्राप्तिसम्भवः तर्हि कस्मिंश्चित् कार्ये शत्रोरप्याश्रयः कर्तव्य इत्याह । आयतीति । ४ मेघवदकस्मादेव राजकार्याणि समुद्भवन्ति न तत्र कालनियम इत्याह । मेघेति । अन्यत्र उदासीनादिषु । सन्धि-विग्रहौ वक्ष्यमाणलक्षणौ ताभ्यां द्वैधीभावं द्विप्रकारत्व शत्रुत्वं मित्रत्वं च गच्छेत् । ६ यदि अन्यः आत्मना सह उत्सहते चेत् द्वैधीभावः कर्तव्यः नान्यथा । ७ बलवतो राजद्वयस्य मध्ये स्थितः अल्पबलः अतीव सुखसाध्यो भवतीत्याह । बलवदिति । अत्र दृष्टान्तमाह । उभयसिंहेति । शरणार्थी स तत्कालमेव कमप्याश्रयेदित्यर्थः । ८ अथ शत्रुणा कथ सन्दध्यादित्याह । भूम्यर्थिन प्रति सन्धौ कर्तव्ये भूमेः फलदानेनैव सन्दध्यात्, न भूमिदानेन । ९ तत्कुत इति चेदाह । फलेति । फलदानं नित्यं न भवति, भूमिस्तु एकवारं दत्ताचेत् सा गतैव । १० तदपि कुत इति चेदाह । अवज्ञयेति । यथा अवज्ञयाप्यारोपितस्तरुर्बद्धमूलो भवति तथा दत्तां भूमिमुपभुञ्जन् राजा दृढमूलो भूत्वा तां न मुञ्चतीत्यर्थः । ११ सामाद्युपायोपपन्नः अनुरक्तप्रकृतिश्च राजा अल्पे ऽपि राज्ये सार्वभौमः अप्रतिहताज्ञः सार्वभौमादीनां भयरहितः भवति ।

लागता कस्यापि भूमिः किन्तु वीरभोज्या वसुन्धरा । सामोपप्रदानभेद-दण्डा उपायाः । तत्र साम पञ्चविधम् । गुणकीर्तनं सम्बन्धोपाख्यानं परस्परोपकारसन्दर्शनमायतिप्रदानमात्मोपसन्धानमिति । मदीयं यद्द्रव्यं तद्भवता स्वकृत्येषु नियुज्यतामित्यात्मोपसन्धानम् । बह्वर्थसंरक्षणायाल्पार्थप्रदानेन परप्रसादनमुपप्रसादनम् । योग-तीक्ष्ण-गूढपुरुषोभयवेतनैः परबलाय परस्परशङ्काजननं निर्भर्त्सनं वा भेदः । वधः परिक्लेशो ऽर्थहरणं दण्डः शत्रोरागतं साधु परीक्षेत् । कल्याणबुद्धिमनुगृण्हीयात् । किमरण्यजमौषधं न भवति क्षेमाय? । गृहप्रविष्टः कपोत इवाल्पोऽपि शत्रुसम्बन्धी लोकः तन्त्रमुद्वासयति । मित्र-हिरण्य भूमिलाभानामुत्तरोत्तरलाभः श्रेयान् । हिरण्यं भूमिलाभाद्भवति । स्वयमसहायश्चेत् भूमिहिरण्यलाभायालं भवति तदा मित्रं गरीयः । सहानुयायिमित्रं स्वयं वा स्थास्नु भूमिमित्राभ्यां हिरण्यं गरीयः। शत्रोर्मैत्रीकारणं विमृश्य तथाऽऽदरेत्, यथा न वञ्चयते। गूढोपा

१ मम कुलपरम्परागतेय भूमिरिति मत्वा निश्चिन्तो न भवेदित्याह । नेति। यतो वीरेणैव भोज्या अतः राज्ञा शूरेण भाव्यमित्यर्थः । २ सामादीन् चतुर उपायानाह । सामेति । ३ पञ्चविधं सामाह । आत्मोपसन्धानं समनन्तरोक्तलक्षणम् । ४ उपप्रादनलक्षणान्याह । बह्वर्थेति । ५ भेदस्य लक्षणमाह । योगेति । योगाः विषादयः । ६ दण्डलक्षणमाह । वध इति । ७ य कमपि शत्रोः सकाशादागत पुरुषं परीक्षेत् । ८ परीक्ष्य कल्याणकर्तारंचेत्तं शत्रुसकाशादागतमपि अनुगृण्हीयात् । अत्र दृष्टान्तः अरण्यजमप्यौषधं क्षेमाय कारणं भवति अतः शत्रोरागतो ऽपि अनुग्रहयोग्यो भवत्येव । ९ द्विषतः शत्रुपक्षीयस्य असङ्ग्रहे हेतुमाह । गृहेति । कपोतस्य गृहे प्रवेशनमशुभमित्याहुर्धर्मशास्त्रकृतः । स गृह गृहपतिं च नाशयति । तद्वत् शत्रुपक्षीयः अल्पो ऽपि तन्त्र नाशयतीत्यर्थः । १० मित्रहिरण्यभूमिलाभानां मध्ये मित्रमेव श्रेष्ठमित्याह । भूमीति । ११ हिरण्यं भूमि-मित्राभ्यां श्रेष्ठमित्याह । सहेति । १२कदाचित् शत्रुरेव मित्रभावेन प्राप्तश्चेत् तमपि स्वीकुर्यात् । परं तस्माद्वञ्चनां न प्राप्नुयादित्यर्थः ।

येन सिद्धार्थस्यासंवृतिकारणं सर्वशङ्काङ्कुरपवादं च करोति। अभयप्रदानमान्योपदेशेन दुर्जनं शमयेत्। गृहीतपुत्रदारानुभर्येवेतनान् कुर्यात्। शत्रुमपकृत्य भूमिदानेन तदायाऽस्मात्मनः सफलयेत् क्लेशयेत् वा। अन्यस्य भूरन्यस्य महता प्रयत्नेन परिणमति न परिणमति वा। परविश्वासजनने सत्यं शपथः प्रधानपुरुषपरिग्रहो वा हेतुः। 'सहस्रैकीयः पुरस्ताल्लाभः शतैकीयः पश्चात्कोपः' इति न्यायात्। सूचीमुखा ह्यनर्था भवन्ति। अल्पेनापि सूचीमुखेन महान् दोरकः प्रविशति। पुण्यपुरुषापचयः क्षयः। हिरण्यधान्यापचयो व्ययः। तमात्मनो लाभमिच्छेत्, येन सामिषः क्रव्याद इव नापरैरवरुध्यते। आगतमर्थं केनापि कारणेन नावधीरयेत्। यदैवार्थागमस्तदैव सर्वनक्षत्र-ग्रहबलम्। गजेन गजबन्धनमिव अर्थेनार्थोपार्जनं, न केवलाभ्यां बुद्धिपौरुषाभ्याम्। महतो जनस्य सम्भूयोत्थाने सङ्घातविघातेन दण्डं

---

१ गूढोपायेन स्थितश्चेत् शङ्कास्पदो भवतीत्याह। मूढेति। २ दुर्जनस्य शमनोपायमाह। अभयप्रदानेति। मान्यानामन्येषामुपदेशेन। ३ शत्रोः सेवकान् स्वस्य वेतनदानेन स्वकीयान् कुर्यादित्याह। गृहीतेति। ४ सफलयेत् वशं कुर्यात्। ५ परकीयं राज्यं सम्पादितं चेत् तदात्मवशं भवेदेवेति न नियमः। ६ प्रधानपुरुषाः सचिवादयः। ७ एतस्मिन्नर्थे न्यायमाह। सहस्रेति। ८ अनर्थास्तावदल्पेनैव रूपेण आगच्छन्ति। ९ पुण्यकारिपुरुषाणां नाश एव क्षयः। १० व्ययस्वरूपमाह। हिरण्येति। ११ क्रव्यादः मांसभोजी। १२ प्राप्तस्यार्थस्यावज्ञा न कर्तव्येत्याह। आगतेति। १३ अर्थागमस्य न मुहूर्ताद्यपेक्षा यदा तस्य आगमो भवति तदैव उत्तमः काल इत्याह। यदेति। १४ अर्थेनैव अर्थागमो भवति इत्यत्र गजस्य दृष्टान्तः। १५ यदि केचन सम्भूय उत्थिताः स्वस्य नाशं कर्तुं प्रवृत्ताः तदा तान् पृथक् पृथक् कृत्य दण्डयेत्। अन्यथा दण्डमपि ते नाद्रियेरन्।

प्रणयेत् । शतमवध्यं सहस्त्रमदण्ड्यमिति । सा राजन्वती भूमिर्यस्यां नासुरवृत्तिः । परप्रणेयो राजा अपरीक्षितार्थमानप्राणो ह्यमरवृत्तिः । परलोभ-प्रसादानुवृत्तिः परप्रणेयः । तत्स्वामिनः छन्दानुवृत्तिर्वर्तनं श्रेयो, यन्नभवत्यायत्यामाहिताय । निरनुबन्धमर्थानुबन्धनं चार्थमनुगृण्हीयात् । नासावनर्थो, यत्रायत्यां भवति महानर्थ संबन्धः । लाभस्त्रिविधो नवो भूतपूर्वश्च पित्र्यश्च ।

## इति षाड्गुण्यसमुद्देशः ॥ २९ ॥

—०:०—

स किं मन्त्री मित्रं वा, यः प्रथममेव युद्धोद्योगं भूमित्यागं चोपदिशति भूपालानाम् । स चाहरति महान्तमनर्थं संशयं वा । सङ्ग्रामे को नामात्मवानादावेव स्वामिनं प्राणसन्देहतुलामारोहयति । भूम्यर्थं नृपाणां नयो विक्रमश्च, न भूमित्यागाय ।

---

१ अपराधिनां शत चेत्तं न वधार्हाः सहस्रं चेन्न दण्डार्हाः भवन्ति । २ राजन्वती उत्तमेन राज्ञा प्रतिपालिता । "सुराज्ञि देशे राजन्वान् स्यात्ततोऽन्यत्र राजवान्" इत्यमरः । आसुरवृत्तिः । तामसवृत्ति । राज्ञ इति शेषः । ३ अमरवृत्तिमाह । परप्रणेयेति । परप्रणेयत्व समनन्तरवक्ष्यमाणलक्षणम् । ४ परस्य लोभ-प्रमादयोरनुवर्तन करोति स परप्रणेयः । ५ स्वामिनः छन्दानुवर्तनं कर्तव्यं परं आयत्यां यदहिताय न भवेत् तदत्र कर्तव्यम् । ६ निरनुबन्धस्यार्थस्य सङ्ग्रहः कर्तव्य इत्याह । निरनुबन्धेति । ७ उत्तरस्मिन्काले अर्थलाभो यस्माद्भवति स न अनर्थः । ८ अथ त्रिविधं लाभमाह । नव इति । भूतपूर्वः पूर्वमेव प्राप्तः ।

---

९ अथ युद्धसमुद्देशमाह । यः उपायान्तरानुष्ठानमन्तरेव युद्धोद्योगं स्वस्थानाद् पलायनं वा उपदिशति स किंमन्त्री कुत्सितः सचिवः । उपायान्तरासाध्ये एव रिपौ युद्धं पलायनं वा कर्तव्यमित्यर्थः । १० युद्धं पलायनं च प्राणसन्देह एव । ११ पलायनं विरुद्धमित्याह । भूमीति । भूम्यर्थमेव नये विक्रमे च सति कथं तस्याः त्यागः कर्तव्यत्वेन ग्राह्यः स्यात् ।

बुद्धियुद्धेन परान् जेतुमशक्तः शस्त्रयुद्धमुपक्रमेत् । न तथेषवः प्रभवन्ति यथा प्रज्ञावतां प्रज्ञा । दृष्टेऽप्यर्थे भवन्त्यपराद्धेषवो धनुष्मन्तः । अदृष्टमप्यर्थं साधु साधयन्ति ज्ञानवन्तः । श्रूयते हि किल दूरस्थोऽपि माधवपिता कामन्दकीप्रयोगेण मालतीं माधवाय साधयामास । प्रज्ञा ह्यमोघं शस्त्रं कुशलबुद्धीनाम् । प्रज्ञाशस्त्रहताः कुलिशहता इव न पुनः पुनः प्रादुर्भवन्ति भूमिभृतः । परैः स्वस्याभियोगमपश्यतो भयं नदीमपश्यत उपानत्परित्यजनमिव । अतितीक्ष्णो बलवानपि शरभ इव न चिरं नन्दति । प्रसरतोऽपसरतो वा समे विनाशे वरं प्रहारो यत्र नैकान्तिको विनाशः । कुटिला हि गतिर्दैवस्य । मुमूर्षुरपि जीवति, जिजीविषुमपि च मारयति इति । दीपशिखायां पतङ्गवदैकान्तिके विनाशे तु विचार्यापसरेत् । जीवतः सम्भवेद्देवोदयकालबलम् । वरमल्पमपि-

---

१ बुद्धियुद्धेन सामादिना शत्रून् जेतुमशक्तश्चेत् शस्त्रयुद्धं प्रक्रमेत् । नान्यथा । २ यथा प्रज्ञया कार्यं सिद्ध्यति तथा बाणैरपि न सिद्ध्यतीत्यर्थः । ३ अत्र दृष्टान्तमाह । श्रूयत इति । माधवपिता देवरातः । श्रूयते भवभूतिविरचिते मालतीमाधवाभिधे प्रकरणे इत्यर्थः । ४ अन्यानि शस्त्राणि मोघानि भवन्ति, परं प्रज्ञाशस्त्रं ह्यमोघमित्याह । प्रज्ञेति । ५ शस्त्रान्तरेण हताः पुनः प्रभवन्ति, परं प्रज्ञाशस्त्रहताः पुनः कदापि न प्रादुर्भवन्ति । ६ परेषामभियोगमदृष्ट्वैव भय न कर्तव्यमित्याह । परैरिति । अत्र उपानद् दृष्टान्तः । ७ शरभो नाम क्रव्यादः । अतितीक्ष्णत्वात् त्वरितं नश्यति तस्मान्नातितीक्ष्णेन भाव्यमित्याह । अतीति । ८ यत्र शत्रुं विहाय प्रसरतः पलायतो मृत्युरवश्यमेव भविष्यति तत्र प्रहार एव श्रेयान् । यतः तत्र न नियतो मृत्युः । पलायने तु नियत एव । ९ प्रसरणं शत्रोः सम्मुखे गमनम् । अपसरणं पलायनं । एतयोर्द्वयोरप्यनुष्ठाने तुल्य एव विनाशश्चेत् युद्धमेव वरम् । यतो युद्धे न एकान्तेन निश्चयेन विनाशः । १० कुटिला विषमा । ११ यदि निश्चयेन विनाश एव दृष्टः तदा विचारपूर्वकं अपसरणमेव कर्तव्यमित्याह । दीपेति । १२ तत्कुत इति चेदाह । जीवतीति ।

सारवद्बलं, न भूयसी मुण्डमण्डली । असारबलभङ्गः सारबलभङ्गं करोति । नाप्रतिग्रहो युद्धमुपेयात् । राज्यव्यंजनं पुरस्कृत्य पश्चात्स्वाम्यधिष्ठितस्य सारबलस्य निवेशनं प्रतिग्रहः। प्रतिबलं साधु युद्धायोत्सहते, पृष्ठतः सदुर्गा जलभूमिर्बलस्य महानाश्वासः। नद्या नीयमानस्य तटस्थपुरुषदर्शनमपि जीवितहेतुः। निरन्तरमपि सप्राणमेव बलं लभेत। बलवता विग्रहीतस्य तत्तद्दायादापरिग्रहः स्वमण्डले शिखिमण्डूक प्रवेश इव । आत्मशक्तिमविज्ञायोत्साहः शिरसा पर्वतभेदनमिव । साममाध्यं दण्डसाध्यं न कुर्यात् । गुडादभिप्रेतसिद्धौ को नाम विष प्रयुञ्जीत। अल्पव्ययभयात्सर्वनाशं करोति मूर्खः । को नाम कृतधीः शुल्कभयात् भाण्डं परित्यजति । स किं व्ययो, यो महान्तमर्थं साधयति । पूर्णसरःसलिलस्य न परीवाहादपरोऽस्ति रक्षणोपायः। अप्रयच्छतो बलवान् प्राणैः समं गृह्णाति । बलवतोऽर्थं प्रयच्छन्विवाहोत्सव–गृहागमनादिमिषेण प्रयच्छेत् । अमिष-

---

१ मुण्डाः युद्धविधानाभिज्ञाः। तेषां मण्डली समुदायः । २ असारस्य दुर्बलस्य सैन्यस्य भङ्गेन सारवलाऽपि धैर्यं विनश्यतीत्यर्थः । ३ प्रतिग्रहः वक्ष्यमाणलक्षणः। ४ प्रतिग्रहमाह । राज्येति । व्यञ्जनं निमित्तम्। स्वामिना अधिपतिना अधिष्ठितस्य सारभूतबलस्य । ५ प्रतिबलं शत्रोर्बलम् । सदुर्गा जलमयी भूमिः । आश्वासः समाधानकारणम् । ६ अत्र दृष्टान्तमाह । ७ सप्राण बलवदित्यर्थः। ८ बलवता विग्रहीतेन तस्य दायादपरिग्रहः कार्य इत्याह । बलवतेति। ९ शिरसा पर्वतस्य भेदनवदशक्यमित्यर्थः । १० सामसाध्ये दण्डो न प्रणेय इत्यत्र गुडस्य दृष्टान्तमाह । गुडेति । ११ अल्पस्य द्रव्यस्य व्ययभयात् सर्वस्य नाशो न कर्तव्य इत्यत्र शुल्कस्य दृष्टान्तमाह । को नामेति । १२ परीवाहः व्ययः। १३ बलवतः अर्थो न दत्तश्चेत् स प्राणैस्सम गृण्हाति । १४ बलवतोऽर्थः निमित्तं विना न दातव्य इत्याह । बलवत इति । १५ निमित्त विनैव दाने बाधकमाह । अमिषेति ।

मर्थं प्रयच्छतो निरवधिः स्यान्निबन्धे शासनम् । स्वयमल्पबलः कोश-देश-दुर्गभूमिरप्रतिवेदयंश्च यदि शत्रुर्देशं न परित्यजेत्, कृतसंघातविघातो[1] ऽरिभिर्विशीर्णयूथो वनगज इव कस्य न भवति साध्यः । विनिःस्रावितजले सरसि विषमोऽपि जलव्यालः[2] छगल इव भवति । वनविनिर्गतः सिंहोऽपि सृगाल इव । विछिन्नोपान्तप्रताने[3] वंशे किमस्त्याकर्षस्य क्लेशः । नास्ति संघातस्य निःसारता । किं न स्खलयति मत्तवारणं तृणसंघातः । संहतैर्[4] बिसतन्तुभिर्दिग्गजोऽपि नीयते । दण्डप्रसाध्ये शत्रावुपायान्तरम्[5] अग्नावाहुतिप्रदानमिव । यन्त्र शस्त्राग्नि[6] क्षारप्रतीकारे व्याधौ किं नामान्यदौषधं कुर्यात् । अज्ञातरणवृत्तः[7] सर्वोऽपि भवति शूरः । अदृष्टान्यसामर्थ्यः को नाम न भवति सदर्पः? । अति प्रवृद्धा श्रीः कं नाम न दर्पयति[8] । कृतार्थापहारो[9] विघटिततन्त्रश्च परो रुष्यन्नपि किं कुर्यात्? । उत्पाटितदंष्ट्रः सर्पो[10] ऽपि रज्जुरेव । प्रतिहतप्रतापो ऽङ्गारः[11] सम्पतितः किं कुर्यात्? । सम्पतितोऽपि विद्विष्टानां चाटुकारं[12] न बहुमन्येत । जिव्हया लिहन्[13] खड्गो मारयत्येव । तन्त्रावापौ नीतिशास्त्रम् । स्वमण्डलपा-

---

१ कृतः संघातस्य बलस्य विघातः विघटनं यस्य । २ जलव्यालः जलसर्पः भाषायां विरुळें इति प्रसिद्धः । ३ प्रतानं बिरुदादि । वंशे वेणौ । ४ संहतैः एकत्र मिलितैः । ५ उपायान्तर सामादि । अत्र दृष्टान्तमाह । यन्त्रेति । अग्निशब्देनात्र दाहन ग्राह्यम् । ६ यन्त्रादय उपायाः आयुर्वेदे उक्ताः । ७ अज्ञातं रणवृत्तं रणकथा यन सः । ८ दर्पयति गर्विष्ठं करोति । ९ कृतः अर्थस्य अपहारो यस्य । विघटित तन्त्र च यस्य एतादृशः अरिः रुष्टोऽपि किं कुर्यात् न किमपीत्यर्थः । १० सर्पस्य हि दंष्ट्रास्वेव विषं । दंष्ट्रोत्पाटनेन निर्विषत्वात् सर्पः रज्जुसदृश एव भवति । ११ अङ्गारः इङ्गालः । १२ चाटुकारं कपटाचरण न बहु मन्येत तस्य वश्यो न भवेदित्यर्थः । १३ अत्र खड्गस्य दृष्टान्तः ।

लनोभियोगस्तन्त्रम् । परमण्डलावाप्त्यभियोग आवापः । बहू-नेकदा न विगृह्णीयात् । सदर्पोऽपि सर्पो व्यापाद्यत एव पि-पीलिकाभिः । नाशोधितायां परभूमौ प्रविशेत्, न क्रमेद्वा । विग्रहकाले परस्मादागतं कमपि न सङ्गृह्णीयात् । सङ्गृह्य वा सह न वसेत्, अन्यत्र तद्दायादात् । श्रूयतेहि किल निजस्वा-मिनासह कूटकलहं विधायाप्तविद्यःकृकलासो नामानीकप-तिरात्मप्रतिपक्षं विरूपाक्षं राजानं जघानेति । बलमपीडयन्प-रानभिषेणयेत् । दीर्घप्रयाणोपहतं बलमनायासेन भवति परेषां साध्यम् । न दायादात्परः परबलस्यापकर्षणो मन्त्रोऽस्ति । अतो यमभिगच्छेत्तस्यावश्यं दायादमुत्थापयेत् । कण्टकेन कण्टकमिव परेण परमुद्धरेत् । बिल्वेनेहि बिल्वं हन्यमानमुभय-थाप्यात्मनो लाभाय । यावत्परेणोपहतं न चेतोऽधिकमपकृ-त्य सन्धिमुपेयात् । न तप्तलोहमतप्तलोहेन सन्धत्ते । तेजोहि

---

१ तन्त्रमाह । स्वेति । अभियोगः योजना तन्त्रशब्देनाभिधीयतेऽस्मिन्नी-तिशास्त्रे । २ आवापमाह । परमण्डलेति । ३ एकस्मिन् काले बहुभिस्सह विरोधो न कर्तव्य इत्यत्र सर्प-पिपीलिका दृष्टान्तः । ४ अशोधितामिति शेषः । ५ तद्दायादात् शत्रोः दायादात् अन्यस्य सङ्ग्रहेऽपि तेन सह न सवसेत् । ६ उक्तेऽर्थे ऐतिह्यमाह । श्रूयत इति । कूटकलह कपटकलहम् । कृकलासो नाम सेनापतिः । आत्मप्रतिपक्ष आत्मनः प्रभोः प्रतिपक्षमित्यर्थः । विरू-पाक्षो नाम कश्चन प्रतिपक्षे स्थितो राजा तं जघानेत्यर्थः । दीर्घप्रवासेन श्रा-न्तत्वात् । ७ उत्थापयेत् युद्धाय प्रवर्तयेदित्यर्थः । ८ कण्केन कण्टकस्य उद्धरणमिव परेण परस्य उद्धरणं कर्तव्यं न स्वसैन्यनाशेनेत्याह । कण्टकेन कण्टकमिति । ९ एवं कृते उभयथापि लाभो भवतीत्यस्मिन्नर्थे दृष्टान्तमाह। बिल्वेति । बिल्वं बिल्वफलं तत्परस्परेण हन्यमान चेत् उभयोरेकतरनाशे उभयनाशे वा स्वस्य लाभ एव भवतीत्यर्थः ।

साधनकारणं, नापराधस्य क्षान्तिरुपेक्षा वा। उदीयमानो घटेनेवाश्मार्तेन (?) सह विग्रहं कुर्यात् । देवानुलोम्यं पुम्मं पुरुषोपरमोऽप्रातिपक्षताच विजिगीषोरुदयः। पराक्रमकर्कशः प्रवीरानीकश्चेद्धीनः सन्धाय साधूपचरितव्यः। दुःखामर्षजं हि तेजो विक्रमयति । स्वजीविते हि निराशस्याचार्यो भवति वीर्यवेगः । लघुरपि सिंहशावो हन्त्येव हस्तिनम् । नचातिभग्नं पीडयेत् । शौर्यैकधनस्य प्रियोपचारो मनसि तच्छगलस्य सत्कार एव । समस्य समेन सह विग्रहोऽनिश्चितं मरणं जये च सन्देहः । आमं हि पात्रमामेनाभिहतमुभयतः क्षयमेव करोति । ज्यायसा सह विग्रहो हस्तिना पादयुद्धमिव। स धर्मविजयी राजा, यो विधेयत्वमात्रेणैव सन्तुष्टः प्राणार्थमानेषु नापकरोति ।

---

१ तेजसैव शत्रुः साध्यः स्यात् अपराधस्य क्षान्त्या उपेक्षया वा नेत्याह । तेज इति । २ उदीयमानो न सन्धि कुर्यादित्याह । उदीयेति । अत्रघटस्य दृष्टान्तः । ३ दैवस्य आनुलोम्य आनुकूल्यम् । ४ स्वतः पराक्रमेण कर्कशः कठिनः । तेन सन्धाय साधु सम्यक् स उपचरितव्यः । न तेन सह युद्ध कर्तव्यमित्यर्थः । ५ कुत इत्याकांक्षायामाह । दुःखेति । यस्मात् दुःखजनितादमर्षात् जातं तेजः विक्रमं कारयति अतः प्रवीरानीकः शत्रुः कदाचित् भग्नश्चेत् न तेन सह निर्बन्धेन युद्धं कार्यम् । अपि तु सन्धिरेव कर्तव्य इत्यर्थः । ६ वीर्यस्य वेगः आचार्यो भवति जीवितनिरपेक्षं युद्धाय प्रवर्तयतीत्यर्थः । ७ शौर्यमेवैक धन यस्य स शौर्यैकधनः । ८ समस्य समबलस्य विग्रहे जयपराजययोर्न निश्चयः अतस्तन्न कर्तव्य मित्याह । समस्येति । ९ एतत्तु बलवतोर्द्वयोः । निर्बलयोस्तु उभयोरपि नाश एवेत्याह । आममिति । आमं अपक्वम् । १० ज्यायसा आत्मनो ऽधिकबलेन । हस्तिना सह-पादयुद्धे ऽवश्यं नाश एव भविष्यतीत्यर्थः । ११ विधेयत्व दासभावः । अयमभिसन्धि.—पराभूतस्य शत्रोः शरणागत्यैव सन्तुष्टः सन् यस्तस्य प्राणेषु अर्थेषु च न प्रहरति स राजा धर्मविजयी भवतीत्यर्थः ।

सोऽसुरविजयी राजा योऽर्थ मान-प्राणोपघातेन महीमभिलषति। असुरविजयिनः संश्रयः सूनाकारगृहे मृगप्रवेश इव। यादृशात्तादृशाद्वापि नः स्वामी बलवान्यदि साधु चरसञ्चारः सन्नद्धः च। चरणेषु पतितं भीतमशस्त्रं च हिंसन् ब्रह्महा भवति। सङ्ग्राममृतानुयायिषु सत्कृत्य विसर्गाः स्थायिषु संसर्गाः सेनापत्यायत्तःश्रेयान्मतिरदीनात्मा सर्वेषां प्राणिनामुभयतो वहती पापाय धर्माय च(?)। तत्राद्यं स्रोतोऽतीव सुलभं, दुर्लभं तु द्वितीयमिति। सत्येनापि शप्तव्यम्। जनमहतामभयप्रदानमेव शपथः। सतामसतां च वचनायत्ताः खलु सर्वे एव व्यवहाराः। स एव सर्वलोकमहनीयो यस्य वचनमन्यमनस्कतयाप्यबाधितं शासनं भवति। नाप्रेरिता वाग्देवता वदति। सत्याह्येषा सरस्वती। व्यभिचारिवचनेषु नैहिकी पारलौकिकी वा क्रियास्ति। न विश्वस्तघातात्परं पातकमस्ति। विश्वस्तोपघात सर्वाविश्वासं करोति। असत्यसन्धिषु कोशपानं जातानुजातान् हन्ति। असत्यवादिनो-

---

१ धर्मविजयिनमुक्त्वा आसुरविजयिनमाह। सेति। अर्थस्य मानस्य प्राणानां चोपघातेन यः शत्रुं नाशयित्वा तदीयां भूमिमभिलषति स आसुरविजयीत्यर्थः। २ आपदि धर्मविजयिनः संश्रयः कर्तव्यः नासुरविजयिनः। अत्र दृष्टान्तमाह। आसुरविजयिनः सश्रयः सूनाकारस्य पशुमारकस्य गृहे मृगस्य प्रवेश इव नाशाय भवतीति भावः। ३ स्वामी स्वकीयः राजा। ४ शरणागतादीनां वधे ब्रह्महत्यादोषो भवतीत्याह। चरणेष्विति। ५ सङ्ग्रामेमृतानामनुयायिषु साधु आचरितव्यमित्याह। सङ्ग्रामेति। ६ आद्यं स्रोतः पापाचरण सुलभ पुण्याचरण तु दुर्लभमित्यर्थः। ७ शपथस्वरूपमाह। जनेति। अभयदानमेव शपथः। नान्यः। ८ व्यवहाराः सतां असतां च वचनायत्ताः। अतो वचनं पालयेदित्यर्थः ९ महनीयः पूज्यः। शासनं आज्ञा। १० येषां वचनं व्यभिचारि तेषां इहलोकसंबाधिनी पारलौकिकिच क्रिया नास्ति।

मृतस्यापि हि न दुर्यशो विनश्यति । सकृदुत्थिता प्रसिद्धिर्देवै-रपि निवारयितुं न शक्यते । तथा हि धर्मपुत्रः किलासत्यमभाषतापीतमद्यमित्यन्यथाप्यास्ति दुःप्रसिद्धिः । यशोवधः प्राणवधाद्गरीयान् । बल-बुद्धि-भूमिग्रहानुलोम्यं परोद्योगस्य प्रत्येकं बहुविधं विकल्पदण्डनेतोगाः(?)संहतव्यूहविरचितस्य हेतवः कारणानि।साधुविरचितोऽपि व्यूहस्तावत्तिष्ठति यावन्न परमण्डलदर्शनम् । शस्त्रशिष्टाक्रमेन(?,शास्त्रमवबोद्धव्यम् । किन्तु परप्रहाराभिप्रायेण निर्दिष्टदेशकालं प्रकाशयुद्धम्। व्यसनेषु प्रमादेषु वा परपुरुषाभिषेणनावस्कन्दः। अन्याभिमुखं प्रयाणकमुपक्रम्यान्योपघातकरणं कूरयुद्धम् । विषविषमशुक्रीयौपनिषदिकयोरभिचारकोपजापैः परोपघातानुष्ठानं तूष्णींदण्डः । एकं बलस्याधिकृतं न कुर्यात् । भेदापराधेन शङ्कायामेकः समर्थो जनयति महान्तमनर्थम् । राजा राजकार्येषु समाप्तानां सन्तति

---

१ असत्यसन्धिषु असत्यवचनेषु । २ मृतस्यापि हियस्मात् दुर्यशो न नश्यति तस्मात् जीवतः कुतो नश्येदिति भाव· । ३ धर्मपुत्रो युधिष्ठिरः स किल असत्यमवदादिति लोकप्रवादः । तथाहि । अश्वत्थामनाम्नः गजस्य मरणं श्रुत्वा स्वपुत्रो मृत इति शङ्कमानःद्रोणस्तन्निश्चयाय युधिष्ठिर राजान पप्रच्छ। तदा कृष्णार्जुन-भीमसेनैः प्रेरितो राजा गजएव मृत इति जानन्नपि—अश्वत्थामा मृतः, परं नरो वा कुञ्जरोवेति न जानामि—इति सत्याभासं अवदत् । ततश्च युधिष्ठिरो-नासत्यं ब्रूयादिति मत्वा द्रोणः पुत्रशोकेन तनुमजहदिति श्रूयते लोकप्रवादः । ४ व्यूहो बलविन्यासः । ५ परमण्डलदर्शनेन व्यूहस्य नाशो भवतीत्याह । साध्विति । ५ कूरयुद्धस्वरूपमाह । व्यसनेष्विति । ६ तूष्णींदण्डमाह । विषेति । विषादिभिर्हननं तूष्णींदण्ड इत्यर्थः । ७ सैन्यस्याधिकारी एको न कर्तव्य इत्याह । एकमिति । ८ अत्र हेतुमाह । भेदेति । समर्थः एकोऽधिकारी प्रतिकूलश्चेत् स कदाचित् सेनासाहाय्येन अनर्थं जनयेत् इत्यर्थः ।

मपोषयन्नृणभागी स्यात् । साधुनोपचर्येत सर्वधर्मिकेभ्यः। परा गतिः शूराणां युद्धम् । पृष्ठिदं ब्रह्महाणमाहुः । स्वामिनासहापसरणमश्वमेधसमम् । युद्धे स्वामिनं परित्यज्य नास्तीहामुत्र च कुशलम् । विग्रहायोच्चलितस्यार्द्धबलं सदासन्नद्धमासीत । प्रयाणमावासनञ्च कुर्वतः चतुर्दशानिकानि नातिदूरेण सञ्चरेयुःतिष्ठेयुश्च । धूमाग्निदरजाविषाणध्वनितव्याजेनाटविकाः प्रणिधयश्च परबलान्यागच्छन्ति निवेदयेयुः । पुरुषप्रमाणोत्सेधमबहुजननिवेशमाचरणयुक्तः समन्ततो महामण्डपावकाशश्च तदङ्गमध्यस्य सर्वदास्थानं दद्यात् । सर्वसाधारणभूमिकं तिष्ठतो नास्त्यसमुचिता रक्षा। भूचरो दोलाचर. सुरङ्गचरो वा न कदाचित्परभूमौ प्रतिष्ठेत् । करिणं जंपाणं वाप्यध्यासीने न प्रभवन्ति क्षुद्रोपद्रवाः ॥

## इति युद्धसमुद्देशः ॥ ३० ॥

द्वादशवर्षा कन्या षोडशवर्षः पुमान्प्राप्तव्यवहारौ । विवा-

---

१ राजकार्येषु समाप्तानां मृतानां सन्तातिं न पोषयेच्चेत् तेषां ऋणभाक् भवेत् । २ विभिन्नधर्मिणीष्वपि प्रजासु समदृष्टयैव वर्तेतेत्याह । साध्विति । ३ शूराणां युद्धमेव श्रेय इत्याह । परागतिरिति । ४ अपसरणं निन्दितमपि स्वामिना सह श्रेयस्करमेवेत्याह । स्वामिनेति । ५ स्वामिनः युद्धे त्यागः उभयलोकनाशकारीत्यर्थः । ६ आवासनं स्थितिः । ७ प्रणिधयः चराः । विषाणेन शृंगशब्देन । ८ परबलावलोकनस्थानं कीदृशं कर्तव्यं तदाह । पुरुषप्रमाणेति । ९ स्थानं स्थितिः । १० दोला शिबिका तया चरतीति दोलाचरः । अकस्मात् शत्रोः सकाशात् भये प्राप्ते भूचरादिभिर्न स्वरक्षा कर्तुं शक्यते अतः परस्य शत्रोर्भूमौ तथा न भाव्यमित्यर्थः ।

---

११ अथ विवाहकालमाह । द्वादशवर्षेति । प्राप्तव्यवहारौ व्यवहारयोग्यावित्यर्थः ।

हपूर्वो व्यवहारः चातुर्वर्ण्यं कुलीनतां नयति । युक्तितो वरणविधानमग्नि—देव-द्विजसाक्षिकं पाणिग्रहणं विवाहः । स ब्राह्मो विवाहः यत्रालङ्कृत्य कन्या प्रदीयते । 'त्वं भवास्य महाभाग्यस्य सहधर्मचारिणीति' विनियोगेन कन्याप्रदानात् प्राजापत्यः । गोमिथुनपुरःसरं कन्याप्रदानादार्षः । स दैवो विवाहो यत्र ऋत्विजे कन्याप्रदानमेव दक्षिणा । एते चत्वारो धर्म्या विवाहाः । मातुः पितुर्बन्धूनां च प्रामाण्यात्परस्परानुरागेण मिथः समयाद्गान्धर्वः । पणबन्धेन कन्याप्रदानादासुरः । कन्यायाः प्रसह्य हरणाद्राक्षसः । सुप्त-प्रमत्तकन्याहरणात्पैशाचिकः । एते चत्वारोऽधर्मा अपि नाधर्म्याः ॥ यदास्ति वधूवरयोरनपवादः परस्य भाव्यत्वमुन्नतत्वं कनीनिकायोर्लोमशत्वं जङ्घयोरमांसलत्व-

---

१ स्त्रीपुंव्यवहारे विवाहस्यैव प्राधान्ये हेतुमाह । विवाहेति । नीचसंकरस्य अभावेन उत्तमस्य सम्बन्धेन च कुलीनत्व प्राप्नोतीत्यर्थः । २ अथ विवाहस्य लक्षणमाह । युक्तित इति । वरविधान कन्यावरणे निश्चयः । ३ विवाहस्य ब्राह्मादीनष्टौ भेदान् विवक्षुः प्रथम ब्राह्मं विवाहमाह । सेति । यथाशक्त्या अलङ्कृत्य । पित्रादिनेति शेषः ।४ अथ प्राजापत्यं विवाहमाह । त्वमिति । विनियोगेन नियोजनेन । ५ आर्षमाह । गोमिथुनेति । गोमिथुनं वृषभः वत्सतरी च । ६ दैवं विवाहमाह । स इति । यज्ञसाद्गुण्यार्थं ऋत्विजे कन्यैव दक्षिणार्थं यत्र दीयते स दैवः ।७ एते चत्वारो विवाहाः धर्म्याः। ब्राह्मणस्येति शेषः । राजन्यादीनामासुरगान्धर्वादय एव धर्म्या इत्यभिधानात् । ८ अथ गान्धर्वविवाहमाह । मातुरिति । प्रामाण्यात् अयं साध्वाचारवानित्यादिकथनात् । समयात् केनचित् नियमेनेत्यर्थः । ९ आसुरमाह । पणबन्धेनेति । पणबन्धः य इमं पण जेष्यति तस्मै मया कन्या देयेति पणेनेत्यर्थः । १० प्रसह्य बलात्कारेण हरणात् राक्षसः । ११ एते चत्वारोऽपि विवाहाः अधर्माः सन्ति तथापि न अधर्म्याः। वर्णपरत्वेन तेषामपि विधानात् । १२ अथ उत्तमानि लक्षणान्याह । यदेति । उक्तान्येतानि लक्षणानि पुरुषस्य शुभानि कन्यायाऽपि कानिचित् शुभान्येव भवन्ति ।

मूर्वोरचारुत्वं कटि-नाभि-जठर-कुचयुगुलेषु शिरासु च शुभसंस्थानताच बाव्होः कृष्णत्वं तालुजिव्हाधरहरीतकी अविरलविषमभावो दशनेषु सकूपत्वं कपोलयोः पिङ्गलत्वमक्ष्णोः लग्नत्वं पिल्लिकायाः स्थपुटत्वं तिण्डाले दुःसन्निवेशत्वं श्रवणयोः स्थूलपरुषकपिलभावः केशेष्वतिदीर्घत्वं अतिलघून्यूनाधिकसमाधिककुब्ज-वामनकिराताङ्गत्वं जन्म-देहाभ्यां समानत्वाधिकत्वे चेति चान्या दोषाः । सहसा तद्गृहे स्वयं दूतस्य चागतस्याग्रे अभ्यक्ता व्याधिमती रुदती पतिघ्नी सुप्ता स्तोकायुषाऽप्रसन्ना दुःखिता बहिर्गता कुलटा कलहोद्युक्ता परिजनोद्वासिनी अप्रियदर्शना दुर्भगा चेति नैतां वृणीत कन्याम्[1] । शिथिले पाणिग्रहणे वरः कन्यया परिभूयते[2]। मुखमपश्यतो वरस्यानिमीलितलोचना कन्या भवति प्रचण्डा[3] । सह शयानस्तूर्ष्णी भवन् पशुवन्मन्येत[4] । बलादाक्रम्यतो जन्मविद्वेष्यो भवति[5] । धैर्य-चातुर्यायत्तं हि कन्याविस्रम्भणम्[6] । समविभवाभिजनयोरसमगोत्रयोश्च विवाहसम्बन्धः[7] । ननु कन्या पितुरैश्वर्यादल्पमव गणयति । अल्पस्य कन्या, पितुर्दौर्बल्यान्महतावज्ञायते । अल्पस्य महता सह संव्यवहारे महान्व्ययो ऽल्पश्चायः । वरं[8]

---

१ अथ वरणायोग्यां कन्यामाह । अभ्यक्तेत्यादि । एतादृशीं कन्यां न वृणुयाद इत्यर्थः । २ पाणिग्रहणकाले यदि पाणिः शिथिलः स्यात् तर्हि वरः कन्यया परिभूयते । ३ चण्डा लक्षणमाह लज्जया वध्वा मुखमपश्यतः वरस्य या अनिमीलितलोचना सती मुखं पश्येति सा चण्डा भवेदित्यर्थः । ४ अथ वध्वाः विस्रम्भणोपायमाह सहेत्यादिना । एकत्रशयानोऽपि तूष्णिं भवति चेत् वधू तं पशुवन्मूढं मन्येत् । ५ बलादाक्रमणं कुर्याचेद जन्मविद्वेष्यो भवेत् । ६ तस्माद धैर्यचातुर्याभ्यामेव कन्याविस्रम्भणं कार्यमिति भावः । ७ कन्याग्रहणे विभवादिसाम्य मपेक्षितमित्याह समेत्यादिना । ८ वेश्यामपि संग्रहीत नाविशुद्धां कन्यामित्याह । वरमित्यादिना ।

वेश्या सङ्ग्रहो नाविशुद्धकन्यापरिग्रहः । वरं जन्म नास्याः कन्यायाः ।

अदोतरि समृद्धेऽपि किं कुर्युरुपजीविनः ।
किंशुके किं शुकाः कुर्युः फलितेऽपि बुभुक्षिताः ॥

नाकुलीनेष्ववक्षेपः। सम्यग्वृतापि कन्या तावत्सन्देहास्पदं यावन्न पाणिग्रहः । विप्रक्रीतपतावूढापि पुनर्विवाहदीक्षामर्हतीति स्मृतिकाराः । आनुलोम्येन चतुस्त्रिद्विवर्णकन्याभाजना ब्राह्मण–क्षत्रिय–विशः । देशकुलापेक्षो मातुलसम्बधः । सन्ततिरनुपहता रतिर्गृहवार्तानुविहितत्वमाभिजात्याचारविशुद्धत्वं देव-द्विजातिथि-बान्धवसत्काराऽवद्यत्वं दारकर्मणः फलम् । " गृहिणी गृहमुच्यते " नपुंनः काष्ठसङ्घातः । गृहकर्मविनियोगः परिमितार्थत्वमस्वातन्त्र्यं सदाचारः मातृव्यञ्जनस्त्रीजनावरोध इति कुलवधूनां रक्षणोपायाः । रजकशिलाकुकुर्मरसमाना(?) वेश्याः । कस्तास्वभिजातो ऽभियुज्यते । दानैर्दौर्भाग्यं संस्कृतौ परोपभोग्यत्वं अशक्तौ परिभवो मरणं वाप्यहो परोपकारेऽप्यनात्मीयत्वं बहुकालवधोऽपि त्यक्तानां सदैव पुरुषान्तरगामित्वं इति वेश्यानां कुलगतो धर्मः ।

---

१ पितरिसमृद्धेऽपि कन्यायाः कोपयोगः । अदातरी समृद्धेऽपि फलितकिंसुकसदृशे अनुजीविनां न कोऽपि लाभः । २ अथ पुनर्विवाहदीक्षायोग्याः स्त्रिय आह । विप्रेति । ३ अथ वर्णानुक्रमेण स्त्रिय आह । ४ अविच्छिन्ना सन्ततिः गृहव्यवस्था शुद्धत्वं इत्यादि दारसंग्रहस्य फलानि । ५ यत्र गृहिणी वर्तते तदेव गृह, काष्ठ–पाषाणमृत्तिकादिसंघातस्य न गृहत्वमित्याह । गृहीणीति । ६ अथ स्त्रीरक्षणोपायानाह । गृहकर्मेति । अस्वातन्त्र्यं नाम स्वतंत्रतया व्यवहारानधिकारित्वं गृहव्यवस्थायां तु स्त्रीणां स्वातंन्त्र्यमपेक्षितमेव । ७ अथ वेश्यालक्षणमाह रजकेत्यादिना । ८ वेश्यानां कुलधर्ममाह। दानैरिति।

## इति विवाहसमुद्देशः ॥ ३१ ॥

अथ प्रकीर्णकमुच्यते । समुद्र इव विप्रकीर्णसूक्तिरत्नविन्यासनिबन्धनं प्रकीर्णकम् । वर्ण-पद-वाक्य-प्रमाण-योग-विज्ञानमतिः सुमुखः सुव्यक्तगम्भीरमधुरध्वनिः प्रगल्भः प्रतिभानवान् सम्यगूहापोहावधारणागमकशक्तिसम्पन्नः सम्प्रज्ञातःसमस्तलिपिभाषावर्णाश्रमसमयस्वपरव्यवहारस्थितिः आशुलिखन-वाचनसमर्थश्चेति सन्धिविग्रहिकगुणाः । कथाविच्छेदो व्याकुलत्वं मुखवैरस्यमनवेक्षणं स्थानत्यागः साध्वाचरितेऽपि दोषोद्भावनं विज्ञप्ते च मौनमक्षमा कालयापनमाशादर्शनं मृषाभ्युपगमश्चेति विरक्तलिङ्गानि । दूरावेक्षणं मुखप्रसादः सम्प्रश्नेष्वादरः प्रियेषु वस्तुषु स्मरणं परोक्षे गुणग्रहणं तत्परिवारस्य च तदानुनयवृत्तिरित्यनुरक्तलिङ्गानि । श्रुतिसुखत्वमपूर्वाविरुद्धार्थातिशययुक्तत्वं शुभवाकारसम्पन्नत्वमन्यूनाधिकवचनत्वमभिव्यक्तान्वयत्वमिति काव्यस्य गुणाः । अतिपरुषवर्णविन्यासित्वमनन्वितार्थदुर्बोधानुपपन्नपदोपन्यासत्वमयथार्थयतिन्यासत्वमाभिधेयाभिधानातिशयन्यूनत्वमिति काव्यस्य दोषाः । वचनविरुद्धार्थकाविरुद्धभयकविश्चित्रकविर्दुःकरकविर्वर्णकविरारोचिकी सममुखाभ्यवहारी चे-

---

१ अथ प्रकीर्णकसमुद्देशमाह । २ प्रकीर्णलक्षणमाह समुद्रेत्यादिना । ३ सन्धिविग्रहिकपुरुषाणां गुणानाह वर्ण-पदेत्यादिना । सन्धिविग्रहिकाः राजकार्यकर्त्तारः पुरुषा इत्यर्थः । ४ अथ विरक्तस्य चिन्हान्याह । कथेति । कथाविच्छेदादिभिर्लक्षणैः विरक्तं परीक्षेत ।५ अथानुरक्तलक्षणान्याह । दूरावेक्षणेति । ६ मुखप्रसादाभिः लक्षणैः लक्षितं पुरुषं अनुरक्तं जानीयादित्यर्थः । ७ अथ काव्यस्य गुणानाह । श्रुतिसुखत्वेति । श्रुतिसुखत्वादिभिर्गुणैः युक्तं काव्यं उत्तममित्यर्थः । काव्यस्यदोषानाह । अतिपरुषेति अत्यन्तपरुषाक्षरविन्यासादिभिः दोषैः दूषितं काव्य दुष्टमित्यर्थः ।

स्त्वष्टौ कवयः। मनःप्रसादः, कलासु कौशलं, सुखेन चतुर्वर्गविषया व्युत्पत्तिः, संसारे च यश इति कविसंग्रहस्य फलम्। आलप्तिविशुद्धिर्माधुर्यातिशयः प्रयोगवैदग्ध्यमतीव मसृणता स्थानकेऽपि तत्तत्कुकुरितादिभावो रागान्तरसंक्रान्तिः परिगृहीतरागनिर्वाहो हृदयग्राहिता चेति गीतस्यैव गुणाः। समत्वं तालान्वयित्वं गायकाभिनयानुगतत्वं श्लक्ष्णत्वं प्रव्यक्त-यति-प्रयोगत्वं श्रुतिसुखावहत्वं चेति वाद्यस्य गुणाः। दृष्टि-हस्त-पादक्रियासु समसमायोगः सङ्गीतकानुगतत्वं सुश्लिष्टललिताभिनयमङ्गहारप्रयोगभावो रसभाववृत्तिलावण्यमिति नृत्यगुणाः। स महान् यः खल्वार्तोऽपि न दुर्वचनं ब्रूते। स किं गृहाश्रमी? यत्र गत्वार्थिनो यान्त्यकृतार्थाः। ऋणग्रहणे न धर्मः सुखं वा। सेवा वणिज्या च तादात्विकानां आयतिहीनवृत्तीनाम्। द्रव्यं त्वविद्यमानमर्थिभ्यो दीयते नाविद्यमानम्। ऋणेन दातुरासन्नं फलं परोपतापाप्तिः। कलहः परिभवः प्रस्तावेऽर्थालाभश्चेति। अदातुस्तावत्स्नेहः सौजन्यं प्रियभाषणं साधुता च, यावन्नार्थावाप्तिः। कलहः परिभवः प्र-

---

१ अथ कवीनाह। वचनेति। ते च उक्तलक्षणा अष्टौ कवयः। २ कविसंग्रहस्य फलमाह। मनःप्रसादेत्यादिना। धर्मार्थ-काम-मोक्षाः चत्वारो वर्गाः पुरुषार्थाः। तद्विषया व्युत्पत्तिः तेषां सम्यक् ज्ञानम्। ३ अथ गीतस्य गुणानाह। आलप्तिरिति। आलप्तिः आलापः तस्य विशुद्धिः स्वरसाङ्कर्याभावः। प्रयोगः अभिनयः तत्र नैपुण्यं निपुणता। ४ अथ वाद्यस्य गुणा नाह समत्वेत्यादिना। यतिर्विरामः। ५ अथ नृत्यगुणानाह। दृष्टीति। समसमायोगः तालसाम्येन योजनम्। अङ्गहारः अङ्गविक्षेपः। ६ महतःपुरुषस्य लक्षणमाह। स इति। आर्तः पीडितः। दुःखितोऽपि यो दुर्वचनं न ब्रूते स महान्। ७ ऋणग्रहणनिषेधमाह। ऋणेति। ८ इदमधिकं मूलपुस्तके वर्तते। गतार्थमिवेति प्रतिभाति।

स्त्रावेऽर्थक्षोभश्चेति । तदसत्यमपि नासत्यं, यत्र न सम्भाव्यार्थ-हानिः । प्राणावधिर्नास्तिकस्यासत्यवादः । अर्थाय मातरमपि लोको हिनस्ति, किंपुनरनृतं भाषते । सकलासत्योपायनं किं ? विवाहकर्म । दैवायत्तस्तु वधूवरयोर्निर्वाहः । रतिकाले तन्नास्ति यन्न ब्रूते पुमान् । नैतावता च तावत्प्रमाणम् ( ? ) । तावत्स्त्रीपुरुषयोः परस्परं प्रीतिः, यावत्प्रातिलोम्यं न कलहो रतिकैतवं च । तादात्विकबलस्य कुतो रणेषु जयः प्राणार्थस्त्रीषु कल्याणं वा । तावत्सर्वः सर्वस्यानुनयपरो यावन्नभवति कृतार्थः । सहसम्भवो देहोऽपि नामुत्र सहानुयायी किंपुनरन्यः? । अशुभस्य कालहरणमेव प्रतीकारः । पक्वान्नादिव स्त्रीजनादिहतापोपशान्तिरेव प्रयोजनम्? । किं तत्रानुराग- विरागाभ्यां, तृणेनापि प्रयोजनमस्ति किं पुनः पाणिपादवता मनुष्येण? । न कस्यापि लेखमवमन्येत । लेखप्रधाना हि राजानः, तन्मूलत्वात्सन्धिविग्रहयोः सकलस्य जगद्व्यापारस्य च । पुष्पयुद्धमपि नीतिविदो नेच्छन्ति, किंपुनः शस्त्रयुद्धम् । स प्रभुः, यो बहून्बिभर्ति । किमर्जुनतरोः फलसम्प-

१ इदमत्र तात्पर्यं सत्यमसत्यं वा न वाङ्मात्रग । यत्र अर्थस्य असत्यवाक्यप्रतिपाद्यविषयस्य न हानि तदसत्यमपि नासत्यम् । यथा केनचिद कार्यवशात् अनृतमुक्तं चेत् तद्वाक्य नदोषावहम् । २ नित्य व्यवसायं कुर्वीततथापि दम्पत्योर्निर्वाह. दैवायत्त एव नहि सुकृतेनापि व्यवसायेन धनं लभ्यते अपि तु दैवेनैव । २ यतो रतिकाल सर्वमपि श्रुते अतः तत्प्रमाणत्वेन न ग्राह्यमित्यर्थः । ३ प्रातिलोम्यं प्रतिकूलवर्तनम । रतिकैतवं रतिविषये स्त्रिया पुरुषेण वा कृत कपटम् । ४ तादात्विकं केनचिदभिलाष । तावत्कालपर्यंतं स्थापि । ५ अकृतार्थः सर्वस्य सर्वोपि अनुनयपरो भवती इत्याह । तावदिति । ६ सहसम्भवः जीवात्मना सह सम्भवो यस्य । ६ प्रतीकारः परिहारः ७ पक्वमन्न देहस्य तापोपशान्तये यथा भवति तथा स्त्रीत्यर्थ । ८ यतः तृणेनापि प्रयोजनमस्तिअतः सर्वस्यापि सङ्ग्रहः कार्यं इत्यर्थः । ९ बहुजनपोषणमेव प्रभुत्वम् । १० अत्रार्थेअर्जुनवृक्षस्य दृष्टान्तः ।

त्यः, या भवति परेषामुपभोग्या । मार्गपादप इव स त्यागी यः सहते सर्वेषां संबन्धमाबाधाम् । पर्वता इव राजानो दूरतः सुन्दराः । लोकवार्तारमणीयाः सर्वेऽपि देशाः । अधनस्याबान्धवस्य च जनस्य मनुष्यवत्यपि भूमिर्भवति महाटवी । श्रीमतो भवत्यरण्यमपि राजधानी । सर्वस्याप्यासन्नविनाशस्य भवति मतिः प्रायेण विपर्यस्ता । पुण्यवतः पुरुषस्य न क्वचिदस्ति दौःस्थ्यम् । दैवमनुकूलं काः सम्पदो न करोति, विघटयति वा विपदम् । असूयकः पिशुनः कृतघ्नो दीर्घरोषण इति चत्वारः कर्मचाण्डालाः । औरसः क्षेत्रजो दत्तः कृत्रिमो गूढोत्पन्नोऽपविद्धः इति षट्पुत्रा दायादाः पिण्डदाश्च । कानीनः सहोढः क्रीतः पौनर्भवः स्वयंदत्तः शौद्रश्चेति षट्पुत्रा न दायादा नापि पिण्डदाश्च । देशकुलापत्य-स्त्री-समयापेक्षो दायादविभागोऽन्यत्र यतिकुलात् । तत्रैक एव भवति तत्पदार्हः । अत्युपचयः कस्यावज्ञां न करोति? । भृत्यापराधे स्वामिनो दण्डः, यदि भृत्यं न मुञ्चति । अलं महत्तया समुद्रं यो लघुशिरसा वहति अधरतां नयति गुरुभावम् । राति-

१ अथ कर्मचाण्डालानाह असूयक इत्यादिना । २ षड्विधान् पुत्रानाह औरसेत्यादिना । ३ कानीनादयः षट्पुत्राः न दायादाः नापि पिण्डदाश्च भवन्तीत्याह कानीनेत्यादिना । कानीनादीनां दायभागानर्हत्वं कलावेव । युगान्तरे तेषामपि दायाधिकारः आसीत् । अन्यथा धृतराष्ट्रादीनां कथं राज्यपदाधिकारः? । शौद्रः विवाहित शूद्रस्त्रियामुत्पन्नः तस्य । ४ दायविभागनियममाह । देशकुलेति । दायाधिकारिणः न सर्वेषु देशेषु कुलेषु च समानाः । यथा केरलदेशे सत्यपि पुत्रे भागिनेय एव दायाधिकारी नान्यः । एव मेव केषुचित् कुलेषु दौहित्र एव । यतिकुले जैनधर्मीययति ( भाषायां जति ) कुले शिष्य एवाधिकारी । सत्सु सवर्णापुत्रेषु अन्नाच्छादनमात्रम् । तेषामभावे पितुरनुमत्या पित्र्यस्य सर्वस्यापि ग्रहणेऽधिकारः युगान्तरे आसीदिति दृश्यते । ५ उपचयः वृद्धिः ।

मन्त्र-होम-आहारकालेषु न कमपि उपसर्पेत् । सुष्ठुपरिचिते-ष्वपि तिर्यक्षु[1] न विश्वासं गच्छेत् । मत्तवारणारोहे जीवितस्य सन्देहो निश्चितश्चापायः । अत्यर्थमिव[2] विनोदो नाङ्गभङ्गमनवाप्य तिष्ठति । ऋणमधनो दासकर्मणा[3] निर्हरेत्, अन्यत्र यति[4]ब्राह्मण-क्षत्रियेभ्यः । तस्यात्मदेह एव पुनर्वैरी, यस्य यथालाभमशनं श[5]-यनं च न सहते । तस्य किमसाध्यं नाम, यो महामुनिरिव स-र्वाशीनः[6] सर्वक्लेशसहः सर्वत्र सुखशायी च । स्त्रीप्रीतिरिव[7] कस्य नाम स्थिरेयं लक्ष्मीः? । परपैशून्योपायेन प्रायेण राज्ञो वल्लभो लो-कः । परापवादेन[8]आत्मोत्कर्षं मन्यते नीचः । न खलु पल[9]परमा-णोरल्पत्वेन महान् मेरुः, किन्तु स्वगुणेन । न खलु निर्निमित्तं म-हान्तो भवन्ति कलुषमनीषाः[10] । स वह्नेः प्रभावो, यत्प्रकृत्या शीत-लमपि जलं भवत्युष्णम् । सुचिरस्थायिनं कार्यार्थी वा साधूप-चरेत् । स्थितैः सहार्थोपचारण[11]व्यवहारं न कुर्यात् सत्पुरुषे पु-रश्चारितया[12] शुभमशुभं वा कर्म कुर्वति, नास्त्यपवादः प्राणव्या-पादो वा । सम्पत्सम्पदमनुबध्नाति विपच्च विपदम् । को नाम दु-ग्धार्थी कार्यार्थी वा परस्य सञ्चारं विचारयति? । शास्त्रविदः स्त्रिय-श्चानुभूतगुणाः[13] परमात्मानं रञ्जयन्ति, न प्रसिद्धिमात्रेण । चित्रगतमपि

१ तिर्यक्षु गवादिषु । २ यतो अतिविनोदस्य परिणामः दुःखकरः अतो नातिविनोदं कुर्यादित्यर्थः । ३ दासकर्मणा तद्गृहे सेवादिना । ४ यतिः ब्राह्मणः क्षत्रियश्चाधनोऽपि न दासकर्मणा ऋणं निर्हरेत् अपितु स्वस्ववर्णाश्रमोचितव्यापारेण । ५ रोगादिना यस्य शयनं अशनं च न सुखावहं तस्यात्मनो देह एव वैरी । ६ सर्वाशीनः सर्वमश्नाति स महामुनिः सुखीत्यर्थः । ७ स्त्रीप्रीतिरिव इयं लक्ष्मीः अस्थिरा । ८ परापवादेन परनिन्दया । ९ अल्पत्वं महत्त्वं च गुणैरेवेत्यत्र दृष्टान्तः । पलेति । १० कलुषमनीषाः दूषितमनस्काः । ११ अर्थोपचारणं अर्थदानम् । १२ पुरश्चारितया अग्रेसरत्वेन । १३ अनुभूतगुणाः दृष्टगुणाः ।

राजानं नावमन्येत । क्षात्रं तेजो महती खलु पुरुषदेवता । कार्यमारभ्यालोचनं शिरोमुण्डनमनु नक्षत्रप्रश्न इव । अग्निशेषादिव पुरुषशेषादवश्यं भवत्येवायत्यां भयं । नवः सेवकः को नाम न भवति विनीतः । यथाप्रतिज्ञस्य नामनिर्वाहः । आप्राप्तेऽर्थे सर्वोऽपि भवति त्यागी । अर्थी न परेषु नीचैराचरणादुद्विजेत् । जनन्या कृतविप्रियस्य हि बालकस्य जनन्येव जीवितव्यकारणम् ॥

इति सकलतार्किकचक्रचूडामणिचुम्बितचरणस्य रमणीयपञ्चपञ्चाशन्महावादिविजयोपार्जितकीर्तिमन्दाकिनीपवित्रितत्रिभुवनस्य परतपश्चरणरत्नोदन्वतः श्रीनेमिदेवभगवतः प्रियशिष्येण वादीन्द्रकालानलश्रीमन्महेन्द्रदेवभट्टारकानुजेन स्याद्वादाचलसिंहतार्किकचक्रवादीभपंचाननवाक्कल्लोलपयोनिधिकविकुलराजकुञ्जरप्रभृतिप्रशस्तिप्रस्तावालङ्कारेण षण्णवतिप्रकरण-युक्तिचिन्तामणि-त्रिवर्गमहेन्द्रमातलिसंजल्प-यशोधरमहाराजचरित-महाशास्त्रवेधसा श्रीमत्सोमदेवसूरिणा विरचितं नीतिवाक्यामृतं नाम राजनीतिशास्त्रं समाप्तम् । श्रीः शुभं भूयात् ।

॥ नीतिवाक्यामृतं सम्पूर्णम् ॥

---

१ प्रतिज्ञानिर्वहणं कार्यमित्यर्थः । २ निचैराचरणंविना अर्थो न सिद्ध्यति । ३ जीवितव्यं रक्षणमित्यर्थः ।

इति श्री सोमदेवसुरिविरचितनीतिवाक्यामृत व्याख्यायां मुग्धबोधिन्यभिधायां वामनीयायां प्रकीर्णस्तबकः । समाप्तः समाप्ता चेयं व्याख्या ॥

---

मुद्रितमेतन्मुम्बय्यां गोपालनारायणजनतया स्वकीये मुद्रालये ।

# संस्कृत पुस्तकें विक्रीस तयार.

| | रु. | आ. |
|---|---|---|
| हठयोगप्रदीपिका सटीक. . | २ | ८ |
| श्रीकृष्णजन्मखंड. . . | ३ | ८ |
| बृहज्जातक सटीक . . | २ | ० |
| वीरसिंहावलोकन . . | १ | १२ |
| शङ्करानदी गीता . . | ५ | ० |
| सतीपाख्यानरामायण. . | १ | ८ |
| महाशिवपुराणं सटीकम् . | १६ | ० |
| हरिवंशसटीकम् . . . | ६ | ० |
| श्रीमद्भागवत विजयध्वजी. | १० | ० |
| आनन्दरामायणम . . | ५ | ० |
| श्रीमद्भागवतं गुटकात्मक . | ३ | ८ |
| गरुडपुराण (प्रेतकल्पः)सटी० | १ | ० |
| स्तोत्ररत्नाकर . . | १ | ० |
| सिद्धान्तकौमुदी . . . | २ | ८ |
| क्रियापदप्रकाशः. . . | ० | १२ |
| ऋग्वेदी ब्रह्मकर्म. . . | ३ | ८ |
| हिरण्यकेशी ब्रह्मकर्म . | ४ | ० |
| रामाश्वमेध. . . . | २ | ८ |
| जैमिनीकृतअश्वमेध. . . | २ | ० |
| व्रतराज टिप्पणीसहित . | ५ | ० |
| कुवलयानन्द सटीक . . | १ | ८ |
| दशकुमारचरित्र. . . | १ | ८ |
| पञ्चदशी सटीक. . . | ३ | ० |
| हनुमन्नाटक . . . | १ | ० |
| योगवासिष्ठ संस्कृतसटीक. | २५ | ० |
| अध्यात्मरामायण सटीक . | २ | ० |
| श्रीवेङ्कटेशमाहात्म्य . . | ५ | ० |
| अध्यात्मरामायण गुटका . | ० | १२ |
| कुमारसम्भव. . . . | २ | ० |
| मध्वविजयमूळ . . . | ० | १२ |
| भोजचम्पू . . . . | १ | ० |
| अमरकोश मूळ . . . | ० | ८ |
| मध्वविजय सटीक. . . | ५ | ० |
| बौधायन सनिर्णय प्रयोगमाला. | ८ | ० |
| मार्कंडेय पुराण . . . | ५ | ० |
| अनुभूतिप्रकाश. . . | २ | ४ |
| अमरकोश (रामाश्रमी टीका) | ५ | ० |
| बाणकृत कादंबरी सटीक. | ५ | ० |

| | रु. | आ. |
|---|---|---|
| ऋग्वेद सायणाचार्यकृतभाष्य सहित . . . . | ५० | ० |
| सत्यगणपतिव्रतकथा . . | ० | ४ |
| किरातार्जुनीय काव्य . . | २ | ० |
| महाभारत सटीक . . | ४० | ० |
| मनुस्मृति सटीक . . | २ | ० |
| गीता मधुसूदनी टीका . | ४ | ० |
| गीतामृततरङ्गिणी भाषाटीका | १ | ४ |
| चातुर्मासमाहात्म्य . . . | ० | ८ |
| सिद्धांतचंद्रिका सटीक . | ४ | ० |
| बृहज्ज्योतिषार्णव सटीक. . | ७ | ० |
| सर्वार्थचिंतामणि. . . . | ० | १२ |
| भोजप्रबंध . . . . | ० | ८ |
| शाकुन्तल नाटक सटीक. . | १ | ४ |
| पञ्चरत्नीगीता.. . . . | ० | ७ |
| लघुकौमुदी . . . . | ० | ६ |
| हितोपदेश . . . | ० | ८ |
| रत्नावली नाटक . . . | ० | ६ |
| नलचम्पू सटीक. . . | २ | ० |
| रघुवंश सटीक . . . | १ | ० |
| तर्कसङ्ग्रह . . . . | ० | ६ |
| अष्टाध्यायी सूत्रपाठ . . | ० | ५ |
| प्रियदर्शिका. . . . | ० | ८ |
| शारीरक (शाङ्करभाष्य) रत्नप्रभाटीका . . | १० | ० |
| ऋतुसंहार काव्य. . . | ० | ४ |
| गीताश्रीधरीटीका.. . . | १ | ४ |
| साम्बपुराण . . . . | २ | ० |
| गर्गसंहिता . . . . | ४ | ० |
| एकादशीमाहात्म्य . . | ० | १० |
| संस्कार भास्कर . . . | ३ | ० |
| सारस्वत सटीक प्रसादटीका | १ | ० |
| मुहूर्तचिन्तामणि प्रमिताक्षरा. | १ | ८ |
| गीतगोविन्द सटीक . . | १ | ० |
| चिकित्साक्रमकल्पवल्ली . | ३ | ० |
| भामिनीविलास सटीक . | १ | ४ |
| कथासरित्सागर. . . | ६ | ० |
| देवीभागवत. . . . | ७ | ० |

# प्राकृत आणि संस्कृत ग्रंथ.

खालीं लिहिलेले ग्रंथ चांगल्या कागदावर मोठ्या सुंदर ठशांनी आम्हीं छापिलेले विक्रीस तयार आहेत. प्रत्येक ग्रंथाच्या हरएक अध्यायापूर्वी उत्कृष्ट चित्रे दिलीं आहेत, व प्रत्येक पृष्ठाखालीं कठीण शब्दांचे अर्थ दिले आहेत.

## प्राकृत.

| | |
|---|---|
| रामविजय. . ... रु० १—६ | हरिविजय... ... ...रु० १—६ |
| जैमिनी अश्वमेध .. ... ३—८ | शिवलीलामृत ... ... ०—८ |
| संतलीलामृत. ... ... १—१२ | शनिमहात्म्य ... ... ०—२ |
| नाथलीलामृत. ... ... २—० | व्यंकटेशस्तोत्र ... ... ०—१ |
| पांडवप्रताप. . ... ... ३—० | सिंहासनबत्तिशी . ... ०—३ |
| भक्तविजय .... ... २—८ | एकनाथीभागवत . ... ४—८ |
| दासबोध ... ... ... १—१२ | कथासारामृत. . ... २—८ |
| काशीखंड . ... ... ३—८ | उपयुक्त सर्वसङ्ग्रह(विषय ४०)१—४ |

## संस्कृत.

| | |
|---|---|
| सटीकसचूर्णिक श्रीमद्भागवत १२—० | माधवचम्पू: टिप्पणीसमेता . ०—८ |
| श्रीमद्विष्णुपुराण, सटीक. ३—० | श्रीनिवासचम्पू: टिप्पणीसमेता १—४ |
| वाल्मीकिरामायण, सटीक. १२—० | गीतगौरीपति सटीक. . ०—१२ |
| विष्णुसहस्रनाम... . . ०—१ | नाटकप्रहसनम् टिप्पणीस. ०—६ |
| विष्णुसहस्रनामावली . . ०—१॥ | [illegible] चम्पू.टि.स. १—० |
| धातुरूपावली . . . ०—३ | रामविजयं नाटक छायास. ०—१० |
| सूर्यसहस्रनामावली . . ०—१॥ | श्रीविश्वभट—अलङ्कारशास्त्रम. १—० |
| सुन्दरकांड, (वाल्मीकिरामायण) १—० | भागवतचम्पू: टिप्पणीसमेता १—८ |
| रामायणमाहात्म्य . . ०—८ | अध्यात्मप्रदीपिका . . ०—६ |
| रघुनाथविजयचम्पू: . . ०—८ | देवीसहस्रनामावली . . ०—१॥ |
| प्रशस्तिकाशिका . . ०—६ | समासचन्द्रिका . . . ०—१ |
| सुन्दरलहरी टिप्पणीसमेता. ०—४ | मेघदूत . . . . ०—३ |
| अमृततरङ्गिणी टिप्पणीसमेता ०—१० | समासचक्र . . . ०—१ |
| ज्ञानशतकम् टिप्पणीसहितम् ०—४ | शब्दरूपावली . . . ०—२ |
| अमरसार (संस्कृत इंग्रेजी आणि इंग्रेजी संस्कृत कोश ). १—० | गणेशसहस्रनामावली: . ०—१॥ |
| कटाक्षशतकम् टिप्पणीयुतम्. ०—४ | शिवसहस्रनामावली. . ०—१॥ |
| कामाक्षिस्तुतिशतकम् ". ०—४ | कार्तिकमासमाहात्म्य. . ०—८ |
| कृष्णामृततरङ्गिका सटीका . ०—६ | पौषमाहात्म्य . . . ०—६ |
| प्रश्नोत्तररत्नमाला सटीका. . ०—४ | मार्गशीर्षमाहात्म्य . . ०—८ |
| सुभाषितरत्नाकर . . . २—० | श्रावणमासमाहात्म्य. . ०—८ |
| विष्णुसहस्रनाम शङ्कराचार्यांच्या भाष्यासहित . . . ०—८ | मलमास(पुरुषोत्तम)माहा. ०—६ |
| हलायुधस्य कविरहस्यम् . ०—८ | |

**गोपाळ नारायण कंपनी,**

बुकसेलर्स आणि पब्लीशर्स.